*The Adyar Library Series—No. 75*

General Editor:
Dr. G. Srinivasa Murti, B.A., B.L., M.B. & C.M., Vaidyaratna
*Director, Adyar Library*

# VEDĀNTAKĀRIKĀVALĪ

OF

BUCCI VEṄKAṬĀCĀRYA



# वेदान्तकारिकावली

## बुच्चि वेंकटाचार्यकृता

# VEDĀNTAKĀRIKĀVALĪ

OF

## BUCCI VEṄKAṬĀCĀRYA

EDITED BY

PANDIT V. KRISHNAMACHARYA

WITH HIS OWN

*COMMENTARY AND ENGLISH TRANSLATION*

THE ADYAR LIBRARY

1950

# PREFACE

THE importance of the Vis'iṣṭādvaita system of Vedānta philosophy, lies in the fact that this system derives full support from the Vedic texts. This system has successfully maintained both the difference and non-difference between the Brahman and the world of sentient and non-sentient beings as taught in the Vedic texts. The main principles of this system are based on the relation between the Brahman and the world in the shape of the soul and body. The sentient and non-sentient beings constitute the body of the Brahman as they are invariably resting on Him, and completely controlled by Him. Just as our body is sustained, controlled and engaged for his own purpose by the indwelling soul, all sentient and non-sentient beings also are sustained, controlled and engaged for His own purpose by the Inner Ruler Brahman. This sort of relationship between the Brahman and the world, enables the Vis'iṣṭādvaitin to explain the non-difference between them. At the same time the difference between them is also proved by the clear distinction in their essential nature and characteristics.

Many works have been written on the basis of this principle. The Vedāntakārikāvalī of Surapuram Bucci Veṅkaṭācārya is one of them. This is a

metrical epitome of the principles accepted in the Vis'iṣṭādvaita system of Vedānta philosophy. The author Bucci Veṅkaṭācārya was the third son of Aṇṇayārya of the S'ri S'aila family of Bukkapaṭṭanam, near Gutti in Āndhrades'a and a protege of Veṅkaṭanāyaka, the chief of Surapuram which is said to be between the rivers Krishnā and Bhīmā in Gulbarga Dt., in the Nizam's Dominions. The author's date may be fixed between the last part of the 18th century and the beginning of the 19th century A.D.

The work was printed and published about 50 years ago in Telugu and Devanāgarī scripts. But these publications have not proved to be satisfactory as they contained many mistakes. These editions are not available now. Hence there is no need for an apology for undertaking this edition. In order to facilitate the average readers in understanding the subject correctly, an easy gloss in Sanskrit and a translation in English have been added.

The edition is based on the following materials:

1. A paper MS. of the Adyar Library, written in Telugu script. This is indicated by the letter A.

2. An old edition printed in Telugu character. This is indicated by the letter B.

3. A paper MS. of the Adyar Library, written in Grantha script. This is indicated by the letter C.

4. An old edition printed in Devanagari character in the Stotraratnāvali, Part II, published by the L. Venkatesvara Press, Bombay. This is indicated by the letter D.

In this connection our hearty thanks are due to:

1. The Honorary Director and the Honorary Curator of the Adyar Library for their kind permission to include this publication in the issues of the Adyar Library Bulletin—Brahmavidyā,

2. Pandit K. Ramachandra Sarma of the Adyar Library for his co-operation which proved of great value,

3. Dr. V. Raghavan of the Madras University for his generous help rendered by giving a copy of his article entitled—"The Surapuram Chiefs and some Sanskrit writers patronised by them" published in the Journal of the Andhra Historical Research Society, Rajahmundry, Vol XIII, 1940. His article was of immense use in getting information regarding the Chiefs of Surapuram and fixing the date of our author and

4. The Superintendent of the Vasanta Press, Adyar for executing the printing of the work very neatly and attractively.

V. KRISHNAMACHARYA

# उपोद्घातः

जगद्ब्रह्मणोर्भेदाभेदबोधकतयापाततः परस्परव्याहतानामिव भासमानानां श्रुतिवाक्यानामविरोधेन शास्त्रीयप्रक्रियां लोकानुभवं चानुसृत्य समञ्जसार्थप्रतिपादनादत्युत्कृष्टमिदमौपनिषदं विशिष्टाद्वैतदर्शनमिति बहुमन्यन्ते विपश्चितः। तदिदं दर्शनमनिदंप्रथमश्रुतिप्रमाणसिद्धमपि कैश्चिन्मतान्तरप्रवर्तकैः स्वस्वमतप्रतिष्ठापनपरैर्मध्ये समुपजनितविच्छेदप्रसरं पुनर्नाथयामुनादिभिराचार्यवर्यैर्यथापुरं परिवर्धितमभूदिति सार्वलौकिकमेतत्। तथा चाहुः—

" दृष्टेऽपह्नुत्यभावादनुमितिविषये लाघवस्यानुसारा-
च्छास्त्रेणैवावसेये विहितिविरहिते नास्तिकत्वप्रहाणात्।
नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धै-
स्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः ॥"

इति। मृषावादिभिरिव प्रत्यक्षसिद्धेऽर्थेऽपह्नवाभावात्, वैशेषिकादिभिरिवानुमेयेऽर्थेऽनपेक्षितकल्पनाभावात्, निरीश्वरमीमांसकादिभिरिव प्रमाणसिद्धेश्वरापह्नवप्रभृत्यपार्थवर्णनाभावाच्च, श्रीनाथमुनिभिः पुनः प्रवर्तितं बहुभिर्यामुनेयप्रबन्धैः परिवर्धितं यतीन्द्रैर्भगवद्रामानुजमुनिभिः प्रबन्धकरणादिना परित्रातमिदमेवास्माकं विशिष्टाद्वैतदर्शनं सूर्योदयवदशेषतमोनिरसनक्षममिति तदर्थः। निष्कृष्टस्य ब्रह्मणस्तदितरचिदचिद्वस्तुवैलक्षण्यं बोधयन्ति भेदश्रुतयः। चिदचिद्वस्तूनां ब्रह्मापृथक्सिद्धविशेषणत्वात् तद्विशिष्टैक्यविवक्षयैकत्वं बोध-

यन्त्यद्वितीयत्वश्रुतयः। तादृशविशेषणतारहितवस्त्वन्तरनिषेधविवक्षयेतरनिषेधपरा नानात्वनिषेधश्रुतय इति ब्रह्मैक्यादिश्रुतीनां सामञ्जस्यमस्मिन्मत एव। मृषावाद्यद्वैतिनां मते तु भेदश्रुतीनां काल्पनिकापरमार्थभेदबोधकत्वेन तात्पर्यं वर्णनीयम्। तच्च तासां पर्यायतोऽप्रामाण्याभ्युपगमपर्यवसायीति न सामञ्जस्यं तत्र। द्वैतमात्रवादिनामानन्दतीर्थीयानां मते त्वभेदश्रुतयः क्लिष्टगत्या पदच्छेदादिवर्णनेन नेया इति तत्राप्यस्वारस्यमिति भावः।

तदेवं विशिष्टाद्वैतमिति पदस्यैषोऽर्थः पर्यवसन्नः—विशिष्टस्य अशेषचिदचिद्विशिष्टस्य ब्रह्मणः अद्वैतमैक्यं विशिष्टाद्वैतमिति। अशेषचिदचिद्विशिष्टं ब्रह्मैकमेव तत्त्वमिति "एकमेवाद्वितीयम्" इत्यादिश्रुतेरर्थः। तत्र चिदचिद्ब्रह्मणां चितामचितां च मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादिविवक्षयैकत्वव्यपदेशस्तदितरनिषेधश्चेति। स एषोऽर्थः श्रीभाष्यकारैः श्रीभाष्यादिग्रन्थेषु तत्र तत्र विशकलिततया विस्तरेणोपपादितोऽपि न व्युत्पित्सूनां क्लेशासहमतीनां सुग्रह इति कृत्वा श्रीमद्वेङ्कटनाथदेशिको न्यायसिद्धाञ्जनाख्यं प्रकरणग्रन्थं विरचय्य तत्र तानर्थान् संग्रहेण सुविशदमुपपादयामास। तत्र च ग्रन्थे निरूपितस्यार्थस्य स्थेम्ने तत्र तत्रोपपादनपरा बहवो युक्तयश्च प्रदर्शिताः।

तदेवं स ग्रन्थोऽप्यधुनातननानामलसमतीनां व्युत्पित्सूनां दुर्ग्रहः संजात इति मत्वा केचन तत्त्वविदस्तानेव सैद्धान्तिकानर्थान् संचित्य युक्तिजालानि चापोद्धातिसंग्रहेण कतिचन प्रकरणग्रन्थानारचयन्। तेषु च ग्रन्थेषु यतीन्द्रमतदीपिकैका। सन्ति चान्या अप्येतादृश्यः काश्चित्कृतयोऽप्रकाशिताः प्रतीक्षमाणाश्च प्रकाशनावसरम्। परं तु सर्वा अप्येताः कृतयः कुल्या इव महानद्याः श्रीवेदान्तदेशिकोपज्ञन्यायसिद्धाञ्जनाख्यकृतेरेव समुत्पन्नाः सर्वोपजीव्या भवन्तीत्यत्र न कापि विमतिः। तासु यतीन्द्रमतदीपिका विश्वविश्रुतनाम्नो वाधूलमहाचार्यस्य साक्षादन्तेवासिना श्रीनिवासाचार्येणार-

चिता नातिचिरान् श्रीरामकृष्णमठात् श्रीमद्भिरादिदेवानन्दस्वामिभिः परिशोध्य स्वकीयेनाङ्ग्लभाषापरिवर्तनेन टिप्पण्या च सह प्रकाशमुपानीयत ।

सुरपुराभिजनेषु विद्वत्स्वन्यतमेनाण्णयार्यतनूजेत बुच्चिवेंकटाचार्येण रचितैषा वेदान्तकारिकावली बहुभ्यो हायनेभ्यः पूर्वमान्ध्राक्षरेषु देवनागराक्षरेषु च विन्यस्तमुद्रणापि न समीचीनपाठानाविष्कृतवतीति तस्याः समीचीनपाठनिवेशेन प्रकाशनेऽद्य ममोद्यमो न चर्वितचर्वणमनुकरोति । किंचात्र कारिकाणामतिसंक्षिप्तार्थतया प्रतिपादितेषु विषयेषु प्रायशो व्युत्पित्सूनां विशयो जायेतेति मत्वा तदपोहनाय लघ्वी काचन टिप्पण्यप्यत्र मुद्रणे संयोजिता । अपिच संस्कृतभाषायामतिपरिमितपरिश्रमाणां परं तु भाषान्तरावगतवेदान्ततत्त्वानां विदुषां कृते सर्वसाधारणाङ्ग्लभाषाविपरिणतिरप्यत्र निवेशिता । एवमेभिर्विशेषैर्बहूपकरिष्यति विद्वल्लोकस्येदं प्रकाशनमिति मन्ये । ग्रन्थोऽयमाहत्य त्रयोदशाधिकद्विशत्या पद्यैर्दशसु परिच्छेदेषु यतीन्द्रमतदीपिकामनुसृत्य शारीरकशास्त्रतत्त्वमवबोधयति ।

तत्र प्रमाणनिरूपणं प्रमेयनिरूपणं चेति द्वौ भागौ । प्रथमे प्रमाणनिरूपणे प्रत्यक्षानुमानशब्दाख्यैस्त्रिभिः प्रकरणैर्निरूपिताः । तथा प्रमेयनिरूपणे प्रकृतिकालनित्यविभूतिधर्मभूतज्ञानजीवेश्वराद्रव्याणि सप्तभिः प्रकरणैर्निरूपितानि । आहत्य दशभिः प्रकरणैः परिमितोऽयं ग्रन्थः ।

विशिष्टाद्वैतसिद्धान्तनिर्धारिता विषयाश्चेत्थमवगन्तव्याः । ज्ञानं द्विविधम्—प्रमाणमप्रमाणं चेति । तत्र यथावस्थितव्यवहारानुगुणं ज्ञानं प्रमाणम् । तद्भिन्नमप्रमाणम् । तच्च संशयविपर्ययभेदाद् द्विधा । सामान्यधर्मिस्फुरणे सति अप्रतिपन्नतद्विरोधप्रतिपन्नमिथोविरोधानेकविशेषस्फुरणं संशयः; यथा—अयं स्थाणुर्वा, पुरुषो वेति । अन्यस्यान्यथाध्यवसायो विपर्ययः । स च द्विधा—धर्मविपर्ययः, धर्मिविपर्ययश्चेति । पीतः शङ्ख इत्याद्यः । शुक्ताविदं रजतमित्यन्यः । साक्षात्कारप्रमाहेतुः प्रत्यक्षम् । तच्च

द्विधा—सविकल्पकं निर्विकल्पकं चेति । सजातीयद्वितीयादिवस्तुदर्शने पूर्वदृष्टसजातीयमिदमिति प्रत्यवमर्शपूर्वकं ज्ञानमुदेति । तत् सविकल्पकम् । यत्र त्विदंप्रथमतया वस्तुनो दर्शने तादृशः प्रत्यवमर्शो न जायते, किं तु वस्तुस्वरूपं केवलं भासते तन्निर्विकल्पकम् । उभयत्र वस्तु सप्रकारकमेव भासते । प्रत्यवमर्शसद्भावासद्भावाभ्यां परं भेदः । एतेन निर्विशेषं वस्तु निर्विकल्पकविषय इति परेषां मतमनभिमतं वेदितव्यम् । ननु विशिष्टज्ञानं विशेषणज्ञानपूर्वकं विशिष्टज्ञानत्वात् दण्डीतिज्ञानवदित्यनुमानेन विशेषणज्ञानमावश्यकम् । तच्च निर्विशेषमेवेति चेत्, तन्न । एकेन्द्रियवेद्ययोर्विशेषणविशेष्ययोर्युगपदेव ग्रहणसंभवेन तादृशनियमाभावात्, घटज्ञानात्पूर्वं केवलघटत्वज्ञानस्यानुभवविरुद्धत्वाच्च ।

तत्र प्रत्यक्षभ्रमे वादिनो विप्रतिपद्यन्ते । यथा—सर्वं ज्ञानं प्रमा, यथार्थविषयत्वात् । पञ्चीकरणप्रक्रियया सर्वेष्वपि वस्तुषु भूतान्तराणामवयवाः सन्ति । अतः शुक्तावपि रजतांशसत्त्वात् तस्य च प्रकाशाधिक्येन रजततया भानमिति ।

अन्ये तु तदनङ्गीकुर्वन्तो भ्रममेवं निरूपयन्ति । यथा—भ्रमस्त्रिधा ; सत्ख्यातिः, असत्ख्यातिः, अनिर्वचनीयख्यातिश्चेति । सदेव रजतं तत्र भातीति सत्ख्यातिः । असदेव तत् भातीत्यसत्ख्यातिः । उभयविलक्षणं तत् भातीत्यनिर्वचनीयख्यातिः । तत्र प्रथमा त्रिधा—अख्यातिः, अन्यथाख्यातिः, आत्मख्यातिश्चेति । तदाहुः—

" आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथानिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम् ॥ "

इति ।

१. तत्राख्यातिः प्राभाकराणाम् । ते ह्येवमाहुः—इदं रजतमित्यत्र ज्ञानद्वयम् । इदमिति चक्षुःसंनिकृष्टशुक्तिग्रहणम् । रजतमित्यापणादौ

दृष्टपूर्वस्य रजतस्य शुक्तिरूपसदृशवस्तुदर्शनोत्थं स्मरणम्। उभयोर्भेदाग्रहात् इदं रजतमिति ज्ञानं समुदेतीति। एवं च ज्ञानद्वयभेदाग्रहरूपमेवेदं ज्ञानमित्यख्यातिरित्युच्यते।

२. अन्यथाख्यातिर्नैयायिकानाम्। वस्तुनो वस्त्वन्तरतया भानमन्यथाख्यातिः। शुक्तेः रजतात्मना भानमन्यथाख्यातिरित्यर्थः।

३. आत्मख्यातिर्बौद्धैकदेशिनां योगाचाराणाम्। आत्मशब्दो बुद्धिपर्यायः। आत्मनो बुद्धेः रजतात्मना ख्यातिरात्मख्यातिः। ते हि ज्ञानाख्यं तत्त्वमेकमङ्गीकृत्य तद्व्यतिरिक्तं सर्वं ज्ञानविततिरूपमेवेति ब्रुवते। तेषां मते इदं रजतमित्यत्र ज्ञानमेव रजततया भातीत्यात्मख्यातिरियम्।

४. असत्ख्यातिः सर्वशून्यवादिनां बौद्धैकदेशिनां माध्यमिकानाम्। ते हि शून्यमेकमेव तत्त्वम्। सर्वेऽप्यर्थाः संवृत्यैव सन्त इव भासन्ते। तथा भासमानाश्च पदार्थाः न सन्तः, बाधविषयत्वात्। नाप्यसन्तः, प्रतीयमानत्वात्। नापि सन्तोऽसन्तश्च, व्याहतेः। नापि सद्विलक्षणा असद्विलक्षणाश्च, व्याहतेरेव। किं तु सदसद्विलक्षणा इति वदन्ति। तेषां मते इदं रजतमित्यत्र रजतमत्यन्तासत् सदसद्विलक्षणं भासते। तदाहुः—"चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः" इति।

५. अनिर्वचनीयख्यातिर्मायावाद्यद्वैतिनाम्। ते हि ब्रह्मैकमेव सत्यम्, अन्यत्सर्वमसत्यमित्यभ्युपगच्छन्तोऽपि प्रपञ्चप्रतिभासमेवं समर्थयन्ते—अविद्यासंवलितं ब्रह्मैव प्रपञ्चाकारेण भासते। स च प्रपञ्चो न सन्, बाधात्। नाप्यसन्, प्रतीयमानत्वात्। नापि सदसद्रूपः, व्याहतेः। नापि सदसद्विलक्षणः, व्याहतेरेव। तस्मात् सत्त्वेन वा असत्त्वेन वा उभयात्मना वा अनुभयात्मना वा निरूपयितुमशक्य इत्यनिर्वचनीय इत्याचक्षते।

६. षष्ठीमपि निरधिष्ठानख्यातिं केचिन्माध्यमिकैकदेशिनो मन्यन्ते। यथा—तिमिरार्दितदृष्टेरस्थाने विशकलितकेशदर्शनमिति।

अत्रेदं विचारणीयम्—प्रथमे अख्यातिपक्षे इदं रजतमिति ज्ञानद्वयमेकज्ञानत्वेन दोषवशादङ्गीकृतमित्यन्यथाख्यातावेव पर्यवसानम्। तथा तृतीये आत्मख्यातिपक्षेऽपि वस्तुतो ज्ञानमेव रजततयान्यथा भातमित्यन्यथाख्यातावेव पर्यवसानम्। तथा तुरीये असत्ख्यातिपक्षेऽपि शून्यमेव संवृतिमहिम्ना रजततया भातीत्यन्यथाख्यातावेव पर्यवसानम्। एवमनिर्वचनीयख्यातावपि सदसदनिर्वचनीयं रजतमेव सदात्मना भातीत्यन्यथाख्यातावेव पर्यवसानम्। तथान्येऽपि निर्विषयख्यातिपक्षेऽसन्त एव केशाः सन्त इव भान्तीत्यन्यथाख्यातावेव पर्यवसानम्। तथाच सर्वैरपि ख्यात्यन्तरवादिभिरवर्जनीयत्वात् अन्यथाख्यातिपक्ष एव स्वरसः। परं त्वितोऽप्यख्यातिपक्षे लाघवं विद्यते। तथाहि—द्वितीये अन्यथाख्यातिपक्षे शुक्तौ रजतत्वाभावोऽज्ञात एव भ्रान्तिमुपजनयतीत्यख्यातिरेव मूलम्। तथा तृतीये आत्मख्यातिपक्षेऽपि रजतस्य ज्ञानात्मत्वाग्रहणेव रजतमिति प्रतीतिव्यवहाराविति तत्राप्यख्यातिरेव मूलम्। एवं तुर्ये असत्ख्यातिपक्षे रजतस्य शून्यात्मत्वमगृहीत्वैव रजतव्यवहारप्रतीती इति तत्राप्यख्यातिरेव पर्यवस्यति। एवं पञ्चमे अनिर्वचनीयख्यातिपक्षे अनिर्वचनीयं रजतमेव सदात्मना भातीत्यख्यातौ पर्यवसानं स्पष्टम्। एवमन्ये पक्षेऽपि। अतोऽन्यथाख्यातिपक्षादप्यख्यातिपक्षे लाघवसद्भावादयमेवाङ्गीकार्य इति। तथा सर्वं ज्ञानं यथार्थमिति पक्षेऽपि इदं रजतमित्यत्र पाश्चात्यबाधो रजतांशभूयस्त्वाभावप्रयुक्त इति वक्तव्यम्। एवं च रजतांशाल्पीयस्त्वाख्यातिरेव तत्रापि मूलमिति सैव ज्यायसीति। तथाचाहुः—

"सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी।
तद्वादिनाप्यवर्ज्यत्वात्ततोऽप्यख्यातिलाघवम्॥
स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम्।
इति दर्शयितुं भाष्ये द्वितयं तदनुश्रुतम्।
यन्नाथमुनिमिश्राद्यैर्यथार्थख्यातिसाधनम्।
तल्लोकबुद्ध्यनारोहाद्वैभवं केचिदूचिरे॥"

इति। ख्यात्यन्तरनिरासस्तु ग्रन्थान्तरेषु विस्तरशोऽनुसंधेयः। इतीयं न्यायपरिशुद्धिसमाहृता गौतमीयपक्षपरिशोधनफक्किका। वेदान्तमतनिरूपणैदंपरतत्त्वमुक्ताकलापादिग्रन्थरीतिस्तु यथार्थख्यातिपक्षपातिनीति सैव ख्यातिर्वेदान्तकारिकावल्यां सिद्धान्ततयोपवर्णिता ज्ञातव्या।

प्रत्यक्षमेकं प्रमाणमभ्युपगच्छन्तश्चार्वाकाः

"विशेषेऽनुगमाभावात्सामान्ये सिद्धसाधनात्।
अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः॥"

इत्यनुमानप्रामाण्यवादिनः परिहसन्ति। तेषामयं भावः—पर्वते धूमेन वह्निमनुमित्सन्निदं प्रष्टव्यः—किमेतत्पर्वतीयवह्निमनुमित्ससि, उत वह्निसामान्यमिति। नाद्यः पक्षः, एतत्पर्वतसंबन्धिनो वह्नेरनुमितेः पूर्वमज्ञातत्वेन तन्निरूपितव्याप्तेर्दुर्निरूपत्वात्। नान्त्यः, धूमाधिकरणे वह्निसामान्यसत्त्वस्य व्याप्तिग्रहदशायामेव ज्ञातत्वेन सिद्धसाधनादनुमानाप्रवृत्तेः। तस्मादनुमानाप्रसिद्धिरिति। एवं वदद्भिश्चार्वाकैरनुगमाभावात्सिद्धसाधनादिति हेतूपन्यासेनानुमानासंभव एवानुमित्सित इति हयारूढास्ते हयमेवापह्नोतुमिच्छन्तीति कृतं तन्मतविमर्शनेन।

तदेतदनुमानं पूर्वं प्रमाणान्तरावसितस्यैव वस्तुनः पक्षसंबन्धमात्रं साधयितुमीष्टे, न तु सुतरामतीन्द्रियस्येतीश्वरानुमानं नैयायिकाद्याद्रियमाणमसंगतमेवेति कृत्वा शास्त्रयोनित्वाधिकरणे शास्त्रैकप्रमाणत्वमीश्वरस्योक्तं वेदान्तिभिः। तदुक्तं न्यायसिद्धाञ्जने—"नन्वस्माकमीश्वरानुमाननिरासेन किं प्रयोजनम्? न च प्रयोजनाभावमात्रम्; अनुमानेनेश्वरं प्रतिपद्य तं भजमानान् प्रति नास्तिक्यशङ्काप्यापादितेति महत्तेषामस्माकं च पापमिति। अहो महाकारुणिकोऽसि। तादृशेभ्य एतन्नोपदिश्यताम्। प्रयोजनं च शृणु—प्रथमं तावद् यथावस्थिततत्त्वावबोधः, श्रोत्रेण गन्धग्रहणनिरास-

वत्" इति । व्याप्तिग्रहे च हेतोः सपक्षवृत्तित्वग्रहस्यावश्यकतया हेतुरन्वयव्यतिरेकी केवलान्वयी चेति द्विविध एव, न तु केवलव्यतिरेकी वैशेषिकाद्यभिमतः । एतेन अनुभूतिरननुभाव्या अनुभूतित्वात्; यदनुभाव्यं नासावनुभूतिः, यथा घट इत्यादिर्मायावादिवादो निरस्तः । अत्र नैयायिका अनुमानं स्वार्थपरार्थभेदेन द्वेधा विभज्य द्वितीये प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्यानां पञ्चानामवयवानां नैयत्यं मन्यन्ते । मीमांसकास्तु—उदाहरणान्तं तदादि वा त्रयं प्रयोक्तव्यं मन्यन्ते । सौगतास्तु—उदाहरणोपनयौ द्वावावश्यकौ ब्रुवते । सिद्धान्तिनां तु नैवावयवसंख्यानियमः । सूक्ष्ममन्दधियां यावदपेक्षितं तावदुपयोक्तव्यमिति स्थितम् ।

गोसदृशो गवय इत्यादौ सादृश्यादप्यर्थावगतेरुपमानाख्यं प्रमाणान्तरमातिष्ठन्ते नैयायिकाः । अनुमानशब्दयोरन्यतरेण तत्र निर्वाहसंभवात् नोपमानं प्रमाणान्तरमिति सिद्धान्तिनः ।

शब्दमपि केचिद् वैशेषिकादयोऽनुमानेऽन्तर्भावयन्ति । तत्तु शाब्दबोधे व्याप्तिग्रहादिविलम्बस्यानुभवविरुद्धत्वादसंगतमिति सिद्धान्तिनः । पदपदार्थयोः शक्त्याख्योऽतिरिक्तः संबन्ध इति नैयायिकाः । तादात्म्यमेव स इति शाब्दिकाः । सिद्धान्ते तु तत्र बोध्यबोधकभावातिरिक्तः संबन्धो नास्ति । अन्विताभिधानाभिहितान्वयपक्षयोः पूर्वस्मिन्नेवादरः सिद्धान्तिनाम् । वस्तुतस्तूत्तरस्मिन्नपि पक्षेऽङ्गीकृते न कापि क्षतिरित्यनास्थैव पक्षद्वये । निर्विशेषब्रह्मवादिनां त्वन्विताभिधाने संकटं भवतीति तत्परित्यक्तं तैः । यथा गोशब्दो गोत्ववाच्यपि तद्विशिष्टव्यक्तौ स्वरसतः पर्यवस्यति, न तु गोत्वमात्रे विश्राम्यति, एवं चिदचिद्वाचिनः सर्वे शब्दास्तत्तदर्थमात्रेऽपर्यवस्यन्तस्तत्तद्विशिष्टं परं ब्रह्माभिदधति । सेयमपर्यवसानवृत्तिरित्युच्यते । अतो निष्कर्षकातिरिक्तानामपृथक्सिद्धविशेषणवाचिपदानां विशेष्यपर्यवसानस्य व्युत्पत्तिसिद्धत्वात् शरीरवाचकानां देवादिशब्दानां शरीरिवाचकत्वं

सिद्धमिति सर्वे शब्दाश्चिदचिच्छरीरके परमात्मनि पर्यवस्यन्तीति सिद्धम्। तेन "सर्वं खल्विदं ब्रह्म" "ऐतदात्म्यमिदं सर्वम्" "अयमात्मा ब्रह्म" "तत्त्वमसि" "स ब्रह्मा स शिवः सेन्द्रः" इत्यादिसामानाधिकरण्यं तत्तत्प्रकारकब्रह्मपरत्वेन सुसंगतं वेदितव्यम्।

शब्दानां प्रामाण्यं स्वतः, अप्रामाण्यं परत इति सिद्धान्तिनः। नैयायिकास्तु वेदस्येश्वरकर्तृकत्वं प्रतिपिपादयिषवस्तदनुकूलं शब्दानां परतः प्रामाण्यं संगिरन्ते। तत्तु वेदस्य नित्यत्वादसंगतमिति ध्येयम्। अतो वेदाः पाञ्चरात्रादिस्मृतयश्च वेदाविरुद्धाः स्वतः प्रमाणभूताः।

ननु वासुदेवात्संकर्षणनाम्नो जीवसमष्टितत्त्वस्योत्पत्तिवचनात् वेदविरुद्धं पाञ्चरात्रमिति चेत्, अनवधाननिबन्धनमिदं चोद्यम्। तथाहि— "अजायमानो बहुधा विजायते" "तोयेन जीवान् व्यससर्ज भूम्याम्", "प्रजापतिः प्रजा असृजत" इत्यादौ परब्रह्मणो जीवस्य चोत्पत्तिवचनात् परस्परव्याहतत्वेनाप्रामाण्यं वेदानामिति कुचोद्ये यः समाधिः, स एवात्रापीति न किंचिदेतत्। नन्वात्मनित्यत्वोत्पत्त्योर्वेद एव कथनात् यथाकथंचिन्निर्वाहस्तत्रावश्यकः; पाञ्चरात्रे तु सर्वत्र जीवोत्पत्तिरेवोच्यते, न कुत्रापि तन्नित्यतेति न तथा निर्वाहावश्यकतेति चेत्, तदिदमल्पश्रुतानां चोद्यम्। पाञ्चरात्र एव, "स ह्यनादिरनन्तश्च परमार्थेन निश्चितः" इत्यादिवचनानां बहुशो दर्शनात्।

समत्रैगुण्या मूलप्रकृतिर्विश्वपरिणामिनी। सैवाव्यक्तमित्युच्यते। मूलप्रकृतित्वावस्थातः पूर्वमक्षरविभक्ताविभक्ततमोरूपास्तिस्रोऽवस्थाः प्रमाणसिद्धाः। यस्यामवस्थायां गुणसाम्यमप्यस्फुटं तदवस्थायास्तस्याश्चेतनसमष्टिगर्भत्वमक्षरशब्देनोच्यते। न तु चेतनमात्रं, तस्य तमोविकृतित्वविश्वोपादानत्वायोगात्। अतः सर्वं वस्तुजातं चिदचिदात्मकमिति सिद्धान्तः। तदाह पराशरः—"प्रधानादि विशेषान्तं सर्वं चिदचिदात्मकम्" इति। तस्या-

व्यक्षरस्य लयस्थानं विभक्तं तमः। सलिलविलीनलवणवत् परमात्मशरीरतयापि यत्र विवेक्तुं शक्यं तदविभक्तं तमः। इयं मूलप्रकृतिरेव महदहंकारेन्द्रियतन्मात्रभूतैः सह चतुर्विंशतिः प्राकृततत्त्वानि भवन्ति। शैवाद्यागमोक्तः षट्त्रिंशत्तत्त्ववादस्तु प्रमाणविरुद्धः। इमानि च तत्त्वानि जीवस्येश्वरस्य च शरीरभावमापद्यन्ते। यस्य चेतनस्य यद् द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यं, तत्तस्य शरीरमिति निष्कृष्टं शरीरलक्षणम्। प्राकृततत्त्वानीव जीवोऽपीश्वरशरीरभूत एवेति "यस्यात्मा शरीरम्" इत्यादिश्रुतिबलादवगम्यते। तस्मात् समस्तचिदचिच्छरीरकं परं ब्रह्मैकमेव तत्त्वमिति परमसिद्धान्तः।

अणुत्वे सति ज्ञातृत्वं, शेषत्वे सति ज्ञातृत्वमित्यादि जीवलक्षणम्। स चाहंप्रत्ययगम्यः स्वयंप्रकाशश्च। स्वयमेव स्वस्य व्यवहारानुगुणहेतुत्वं स्वयंप्रकाशत्वम्। स्वयमेव कस्यचिद्व्यवहारानुगुणहेतुत्वं ज्ञानत्वम्। एवं चात्मा ज्ञानरूपः स्वयंप्रकाशश्च। तस्य ज्ञानरूपत्वेऽपि ज्ञानाश्रयत्वं च श्रुतिस्मृत्यादिप्रमाणशतसिद्धम्। एकस्यैव ज्ञानाख्यद्रव्यस्य धर्मधर्मित्वे प्रभाप्रभाववद्दृष्टान्तेनाविरुद्धे। धर्मिभूतज्ञानं न विषयावगाहि। धर्मभूतज्ञानं तु तथेति भेदः। बद्धमुक्तनित्यात्मनां त्रिविधानामपि जीवानां ज्ञानं विभु स्वयंप्रकाशं च भवति। परं तु बद्धावस्थायां तत्कर्मणा संकुचितं न सर्वविषयावगाहि। मुक्तावस्थायां तु सर्वकर्मप्रविलयादसंकुचितं सर्वावगाहि भवति। ज्ञानस्य कर्मणा संकोचो नाम प्रकाशाख्यस्य तद्धर्मस्य प्रसराभावः। असंकाचो नाम तस्य धर्मस्य प्रसरः। तथाच प्रकाशाख्ये ज्ञानधर्म एव साक्षात्संकोचप्रसरावभ्युपेतौ न ज्ञान इति तस्य नित्यत्वे न कोऽपि विरोधः। यस्य तु साक्षात्संकोचविकासौ प्रकाशाख्यधर्मस्य, तस्यानित्यत्वमिष्टमङ्गीकृतं च। अयं चार्थो वेदार्थसंग्रहे तत्तात्पर्यदीपिकायां च सुविशदमुपपादितः। एवं स्थिते वस्तुतत्त्वे यत् केषांचिदाधुनिकानां "यद्यपि

भगवद्रामानुजादयः—धर्मभूतज्ञानमिति नाममात्रं, नेदं परमार्थतो धर्मभूतमाधाराधेयभावनिबन्धनम्। किंतु तादात्म्यापन्नमात्मस्वरूपमेवेति वदन्ति" इत्युपक्रम्य, "सति चैवं कथं धर्मभूतज्ञानमपि संकोचविकासशालि च नित्यं चेति श्रीभाष्यमतं स्वविवरणस्यैव न विरुद्धम्" इति दोषोद्भावनं, तत्सर्वमपि विशिष्टाद्वैतमतप्रक्रियारहस्यानवबोधनिबन्धनमिति वेदनीयम्।

अशेषचिदचिच्छरीरकं सर्वशक्ति ब्रह्मैव भगवदीश्वरनारायणादिशब्दैर्व्यवह्रियते। न तु परेषामिव मायाप्रतिबिम्बत्वेन मायोपहितत्वेन वा कल्पितस्वरूप ईश्वरः परमार्थतोऽसन् मिथ्याभूतश्च। स एव सूक्ष्मचिदचिद्विशिष्टो जगत उपादानकारणं, बहुभवनादिसंकल्पविशिष्टो निमित्तकारणं, कालादिरूपः सहकारिकारणं चेत्यभिन्नोपादाननिमित्तादिकारणत्वं तस्यैवेति सिद्धान्तः। तस्य सर्वशरीरित्वेऽपि तद्गतदोषासंस्पर्शात् निरस्तहेयगन्धोऽयमिति "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र" इत्यादौ स्थापितम्। भक्तिप्रपत्तिभ्यामाराधितः स एव मोक्षप्रदो नान्यः कश्चनेति परमसिद्धान्तं "वेदाहमेतं पुरुषं महान्तम्" इत्युपक्रम्य, "नान्यः पन्था अयनाय विद्यते" इति श्रुतिरप्याह। एते कतिपये चान्ये सैद्धान्तिकाः प्रधानभूता विषया अस्मिन् ग्रन्थे संक्षेपेण प्रतिपादिताः।

ग्रन्थकर्ता वेंकटाचार्यः बुचि इत्युपनाम्ना प्रथितो बुक्कपट्टणाभिजनस्य शठमर्षणान्वयलब्धजन्मनो विद्वदग्रेसरस्याण्णयार्यस्य तृतीयस्तनुजन्मा। अयं चाण्णयार्यो बुक्कपट्टणाभिजनोऽपि सुरपुराधिपेन राघवनाम्ना पमिनायकेनाभ्यर्थितः सुरपुरमागत्य तस्य सभामलंकुर्वन्नास्तेति सुरपुरम् अण्णयार्य इति पश्चात्प्रथामुपगतः। पश्चात् तद्वंश्या अपि सुरपुरं विद्वांस इत्याकारिता अभूवन्। अण्णयार्यस्य सुरपुरागमनसमयश्च १७६० तमः क्रिस्तुसंवत्सर इति निर्णीतः। पमिनायको राघवः १७७३ क्रिस्तुसंवत्सरे दिष्टगतिं गतः। ततस्तदात्मजो वेंकटनायकः सुरपुराधिपत्यमूरीकृत्य विदुषोऽण्णयार्यस्य

विनेयो बहुमन्ता चाभूदिति ज्ञायते । अतस्तदात्मजेन वेदान्तकारिकावली-रचयित्रा बुच्चि वेंकटाचार्येण प्रायशः क्रिस्तुसंवत्सराणामष्टादशस्य शतकस्य तृतीयं पादमारभ्यैकान्नविंशस्य प्रथमपादपर्यन्तमुषितवता भाव्यमिति निर्णीयते ।[1]

सुरपुरं विद्वद्भिः प्रणीता बहवो ग्रन्था अधुनाप्युपलभ्यन्ते । तत्परि-शीलनेन तेषां वंशावलीत्थमवगम्यते—




सं. ५. वेंकटाचार्यः II. अयं प्रथमवेंकटाचार्यस्य शिष्यः ।

एतत्कृता ग्रन्थाः—

१. आनन्दतारतम्यखण्डनम् Madras Govt. Library. R. 5094.
२. जगन्मिथ्यात्वखण्डनम् Adyar Library. 22-D. 83.
३. वेदान्तदेशिकदण्डकम् Madras Govt. Library D. 10597.
४. वेदान्तदेशिकाष्टोत्तरशतनामस्तोत्रम् Adyar Library. 30 E. 49.
५. सिद्धान्तरत्नावली Madras Govt. Library. D. 5063.
६. सिद्धान्तवैजयन्ती " " " D. 5007.

[1] For further details on the Chiefs and Sanskrit authors of Surapuram, see Dr. V. Raghavan's article entitled—'The Surapuram Chiefs and some Sanskrit writers patronised by them' published in the Journal of the Andhra Historical Research Society, Rajahmundry, Vol. XIII, 1940.

सं. ६. अण्णयाचार्यः II. अयं कौण्डिन्यश्रीनिवासाचार्यस्य द्वितीय-वेंकटाचार्यस्य च शिष्यः । एतत्कृता ग्रन्थाः—

१. आचार्यविंशतिः Madras Govt. Library. D. 10600.
२. आनन्दतारतम्यखण्डनम् „ „ „ R. 1294.
३. तत्त्वगुणादर्शः सव्याख्यः „ „ „ D. 12295, 12296.
४. व्यावहारिकसत्यत्वखण्डनसारः „ „ R. 6089.
५. रसोदारभाणः Mysore Govt. Library list, P. 151, Vol I.
६. श्रीनिवासस्तुतिः „ „ „ Des. Cat. No. 69.[1]
७. नृसिंहविंशतिः „ „ „ „ „ „ 71.

सं. ७. श्रीनिवासाचार्यः II. अयं कौण्डिन्यश्रीनिवासाचार्यस्य द्वितीयाण्णयाचार्यस्य च शिष्यः । एतत्कृता ग्रन्थाः—

१. अरुणाधिकरणसरणिविवरणी Madras Govt. Library D. 4866.
२. आनन्दतारतम्यखण्डनम् „ „ „ D. 4869.
३. ओंकारवादार्थः or नयमणिकलिका „ „ „ D. 4871.
४. जिज्ञासादर्पणः „ „ „ D. 4883.
५. ज्ञानरत्नप्रकाशिका „ „ „ D. 4886.
६. णत्वदर्पणः „ „ „ D. 4888.
७. तत्त्वमार्ताण्डः „ „ „ D. 4894.
८. प्रणवदर्पणः „ „ „ D. 4932.
९. प्रधानप्रतितन्त्रदर्पणः „ „ „ R. 1304.
१०. नयद्युमणिः, दीपिका च „ „ „ R. 1287.
११. पुच्छब्रह्मवादनिरासः „ „ „ D. 4929.
१२. भेददर्पणः „ „ „ D. 4980.
१३. विरोधनिरोधः or भाष्यपादुका „ „ „ D. 4996.

[1] Published in the Mysore Sanskrit College Journal.

१४. विरोधवरूथिनीप्रमाथिनी Madras Govt. Library. D. 4998.
१५. षष्ठ्यर्थनिर्णय: " " " D. 5054.
१६. सिद्धान्तचिन्तामणि: or उपादानत्वसमर्थनम् " " " R. 2120.
१७. दत्तरत्नप्रदीपिका " " " D. 15636.
१८. नीतिशतकम् " " " D. 12053.
१९. सुभाषितानि " " " D. 12132.
२०. हरिगुणदर्पण: " " " R. 6038.

सं. ९. वेंकटाचार्य: III. अयं द्वितीयतृतीययो: श्रीनिवासाचार्ययो: शिष्य:, अय्या वेंकटाचार्य इति किरीटी वेंकटाचार्य इति च प्रसिद्ध:। अनेनालंकारकौस्तुभे सुरपुरं वेंकटनायक: स्वस्य पोषको निर्दिष्ट:। एतत्कृता ग्रन्था:—

१. अचलात्मजापरिणयमु Madras Govt. Library. R. 41 Telugu.
२. अलंकारकौस्तुभ: " " " R. 369.
३. कृष्णभावशतकम् " " " D. 9901.
४. गजसूत्रवादार्थ: " " " D. 1520.
५. प्रामाण्यवादखण्डनम् Adyar Library. 9 H. 76.
६. शृङ्गारतरङ्गिणी Madras Govt. Library. R. 5439.

सं १०. वेंकटाचार्य: IV. अयं बुच्चि वेंकटाचार्य इति प्रसिद्ध:। एतत्कृता ग्रन्था:—

१. विष्णुसप्तविभक्तिस्तोत्रम् Madras Govt. Library. D. 10352.
२. वेदान्तकारिकावली Now edited and published.
३. इन्द्वष्टोत्तरशतनामस्तोत्रम् Telugu Academy, Cocanada.

सुरपुरं श्रीनिवासाचार्यकृता विंशतिर्ग्रन्थाः पूर्वनिर्दिष्टाः सर्वेऽपि तत्कृता इति निश्चिताः। सन्ति चान्येऽपि केचन ग्रन्था मैसूरुपुस्तकशालायां तत्कर्तृकतया विनिर्दिष्टाः। ते च नास्माभिरध्यक्षिता इति नात्र तेषां परिगणनं कृतम्। एवमनेकेषु तत्कृतग्रन्थेषु तत्त्वमार्ताण्डः श्रीभाष्यव्याख्यारूपोऽतिदुरूहविषयनिरूपणपरः श्रीभाष्योपरि परैरुद्भावितानां दोषाणां निरसनेन बहूपकरोति विशिष्टाद्वैतसंप्रदायस्येति तस्य मुद्रणं प्रकाशनं चावश्यकरणीयं परिशिष्यत इत्यावेदयामः।

वे. कृष्णमाचार्यः

---

# विषयानुक्रमः

पुटाङ्काः

# वेदान्तकारिकावली

वेंकटाचार्यकृता

## १. प्रत्यक्षनिरूपणम्

श्रीमद्रमाधवोपज्ञां[1] नत्वाचार्यपरंपराम् ।
कुर्वे लक्ष्मणसिद्धान्तकारिकां कारिकावलीम् ॥ १ ॥

श्रीः

## वेदान्तकारिकावलीटिप्पणम्

रघुवरचरणद्वन्द्वं तरणिं करवाणि संसृतेस्तरणे ।
यत्पांसुलेशसङ्गाद् प्राबाप्यभवद्विकल्मषा योषा ॥
श्रीवाससंयमीन्द्रस्य पादुकामघमर्षणीम् ।
प्रणम्य मितं कुर्वे टिप्पणं कारिकावलेः ॥

श्रीमदिति । रमाधवः श्रियः पतिः, उपज्ञा प्रथमज्ञेयो यस्याः सा, ताम् । "उपज्ञोपक्रमम्" इत्यादिना नपुंसकत्वं तु तत्पुरुष एव । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति कल्पादौ वेदोपदेशकरणात् नारायणरूपेणाष्टाक्षरमन्त्रोपदेशकरणाच्च भगवतः परमाचार्यत्वेनाचार्यपरंपरायास्तदुपज्ञत्वम् । तदनुसंधानं च "आचार्याणामसावसावित्या भगवत्तः" इति श्रुतिविहितम्,

[1] ज्ञं A.

"लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरंपराम् ॥"

इत्यादिसदाचार्यसंप्रदायावगतं चेति ध्येयम् । श्रीमहालक्ष्म्या अप्याचार्यकोटान्तर्भावमवगमयितुं रमाधव इति रमानिर्देश इत्यवगन्तव्यम् । लक्ष्मणसिद्धान्तः श्रीभगवद्रामानुजसिद्धान्तः, तस्य कारिका प्रतिपादिका, ताम् । कारिकावलीति ग्रन्थनाम । १

1. After bowing down in salutation to the line of spiritual teachers beginning with the Lord of S'rī (Bhagavān Nārāyaṇa) I write the work Kārikāvalī on the principles of the doctrine expounded by S'rī Rāmānuja.

**मानमेयविभेदेन पदार्थो द्विविधो मतः ।**
**मानं प्रत्यक्षानुमानशब्दभेदात् त्रिधा भवेत्[1] ॥ २ ॥**

पदार्थ इति ; पदस्यार्थः पदार्थ इति यद्यत्पदेनाभिधेयं तत्सर्वं गृह्यते । तत्त्वं, पदार्थः, वस्तु, इति पर्यायशब्दाः । एवं च वस्तुसामान्यं द्विधेत्यर्थः । मानं प्रमाणम् । मेयं प्रमेयम् । त्रिधेति ;

"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मसिद्धिमभीप्सता ॥"

इत्याद्याप्ततमवचनात् त्रीण्येव प्रमाणानि । अन्यैरभ्युपगतानामुपमानादीनामत्रैवान्तर्भावः ; यथा उपमानार्थापत्त्योरनुमाने, अनुपलब्धेः प्रत्यक्षे । प्रमायाः करणं प्रमाणमिति प्रमाणसामान्यलक्षणम् । २

2. The entire Padārthas or entities are of two kinds—Māna (Means of valid knowledge) and Meya (The object of such knowledge). The Māna is again of

[1] मतम्.

three divisions—Pratyakṣa (Perception), Anumāna (Inference) and S'abda (Verbal testimony).

**प्रमेयं द्विविधं प्रोक्तं द्रव्याद्रव्यविभेदतः ।**
**जडाजडत्वभिन्नेऽत्र द्रव्ये तद् द्विविधं जडम् ॥ ३ ॥**

प्रमाविषयः प्रमेयम् । द्रव्यम् उपादानम् । अवस्थान्तरयोगि उपादानम् । तद्भिन्नम् अद्रव्यम्; द्रव्यत्वात्यन्ताभाववत् । परत एव प्रकाशं जडम्; यथा घटादि । स्वयंप्रकाशम् अजडम्; यथा ज्ञानादि । अत्र प्रकाशशब्दो न कान्तिमत्त्वपरः । किंतु ज्ञानविषयत्वपरः । "ज्ञानमर्थप्रकाशः" इति तत्त्वमुक्ताकलापे । आत्मसिद्धौ च "व्यवहारानुगुण्यवचनः प्रकाशशब्दः" इति । एवं च जडत्वं नाम स्वगोचरज्ञानैकविषयत्वमिति फलितम् । अत्र "अभिधेयः पदार्थः; स द्विविधः—भावाभावभेदात्" इति लक्षणावल्यामुदयनोक्तो विभागस्तु न वेदान्तिनां संमतः, तेषां मते अभावस्य भावान्तररूपत्वेन तथा विभागायोगात् । मिथो विरुद्धधर्मपुरस्कारेण निर्देशो हि विभागः । अभावस्य भावान्तररूपत्वं चारम्भणाधिकरणे सूत्रकारैरेवोपपादितम् । घटाभावाभावस्य घटरूपत्वं वदद्भिः परैरभ्युपगतं च । षोढासप्तधादिविभागस्तु न मुमुक्षूपयोगीत्युपेक्षितः । ३

3. The Meya is of two kinds—Dravya (Substance) and Adravya (Non-Substance). Among these two divisions, the Dravya is of two kinds—Jaḍa and Ajaḍa. The Jaḍa is of two kinds.

[*Note.* The Jaḍa is that which can be cognized only with the aid of external means. For instance the pot can be cognized only with the aid of our knowledge. If the knowledge ceases to function, the pot cannot be cognized. But the case of Ajaḍa is different. It is cognizable even without the aid of external means. For instance the Ātman is cognizable by self even with out the aid of the knowledge. Likewise the cognition

which is an attribute of the Ātman is cognizable by him even without the aid of external means *i.e.* another knowledge, when it operates with an object.]

**प्रकृतिः काल इत्याद्या चतुर्विंशतिधा मता ।**
**कालस्तूपाधिभेदेन त्रिविधः परिकीर्त्यते[1] ॥ ४ ॥**

प्रकृतिः काल इति द्विविधं जडमिति पूर्वेणान्वयः । प्रकृतिस्त्रिगुणम् । नित्यविभूतेर्जडत्वं त्वेकदेशिनां मतं, न सिद्धान्तिनाम् । आद्या ; प्रकृतिरित्यर्थः । चतुर्विंशतिधेति—प्रकृतिमहदहंकारास्त्रयः, एकादशेन्द्रियाणि, पञ्च तन्मात्राणि, पञ्च भूतानीत्याहत्य चतुर्विंशतिः । उपाधिः भूतभविष्यद्वर्तमानरूपः । त्रिविध इति ; कलाकाष्ठादिरूपबहुविधभेदस्योपलक्षणम् । ४

4. The two kinds of Jaḍadravya are Prakṛti (The Primary Matter) and Kāla (Time). The former *i.e.*, Prakṛti is of twenty-four kinds. The Kāla is said to be of three divisions due to its Upādhis (Limiting adjuncts).

**अजडं तु पराक् प्रत्यगिति भेदाद् द्विधा स्थितम्[2] ।**
**पराङ् नित्यविभूतिश्च धर्मभूतमतिस्तथा ॥ ५ ॥**

अजडभेदमाह—अजडमिति । वस्तुतस्तु पराक्प्रत्यग्विभेदो द्रव्यसामान्यस्यैव । अतो जडस्य प्रकृत्यादेरपि पराक्त्वं सिद्धम् । तथाचाहुः—

"द्वेधा जडाजडतया प्रत्यक्तदितरतयापि वा द्रव्यम् ।
षोढा त्रिगुणानेहोजीवेश्वरभोगभूमिमतिभेदात् ॥"

इति । स्वस्मै भासमानं प्रत्यक् । परस्मा एव भासमानं पराक् । एवं विवक्षाभेदेन भोक्तृभोग्यप्रेरयितृरूपेण चिदचिदीश्वररूपेणापि विभागस्तत्र तत्र शास्त्रेषु कृतो ज्ञेयः । नित्यविभूतिः शुद्धसत्त्वमयो लोकस्तदन्तर्गताश्च । विभूतिर्नाम स्वाति-

[1] कीर्तितः

[2] मतम्.

शयाधानार्थं नियन्तव्यं वस्तु। धर्मभूतमतिः; जीवेश्वरयोर्धर्मभूतं ज्ञानम्। ज्ञातुर्ज्ञेयावभासो मतिः। जीवेश्वरयोर्धर्मिणोरपि ज्ञानव्यपदेशस्य प्रामाणिकत्वात् तद्व्यावृत्तये धर्मभूतेति विशेषणम्। धर्ममतिरित्युक्ते धर्मस्य मतिरित्यविवक्षितार्थप्रतीतिः स्यादिति तद्व्यावृत्तये भूतपदप्रयोगः। ५

5. The Ajaḍa is held to be of two kinds—Parāk and Pratyak. The Parāk are—Nityavibhūti (The eternal world) and Dharmabhūtajñāna (The attributive knowledge).

[The Parāk is that which is not Self-aware. The Pratyak is that which is Self-aware. These two may be equalized with Inanimate and Animate respectively.]

प्रत्यग्जीवेश्वरभिदाशाली जीवः पुनस्त्रिधा।
बद्धो मुक्तो नित्य इति बद्धस्तु द्विविधो भवेत्॥ ६॥

प्रत्यग्विभागमाह—जीवेश्वरेति। स्वस्मै स्वयं प्रकाशमानं प्रत्यगिति लक्षणं पूर्वमेवोक्तम्। बद्धः कर्मबद्धः। मुक्तः कंचित्कालं बद्धो भूत्वा अनन्तरं भक्तिप्रपत्योरन्यतरप्रीतभगवत्प्रसादेन कर्मबन्धात् विनिर्मुक्तः। नित्यः कर्मबन्धं विना सदा भगवदनुभवपरः। ६

6. The Pratyak is of two kinds—Jīva (Individual Souls) and Īs'vara (The Ruling Supreme Soul). The Jīva is again of three kinds—Baddha (Bound in Saṁsāra), Mukta (Freed from Saṁsāra) and Nitya (Eternally freed from Saṁsāra or never bound in Saṁsāra). The Baddha is of two kinds.

बुभुक्षुश्च मुमुक्षुश्च बुभुक्षुश्च पुनर्द्विधा।
अर्थकामपरो धर्मपरश्चेति विवेचनात्॥ ७॥

पूर्वकारिकाप्रस्तुतं बद्धभेदमाह—बुभुक्षुरिति । बुभुक्षुः प्राकृतभोगेच्छुः । मुमुक्षुः संसारनिवृत्तिपूर्वकाप्राकृतभोगेच्छुः । ७

7. They are—Bubhukṣu (Desirous of worldly enjoyments) and Mumukṣu (Desirous of freedom from Saṁsāra and divine bliss.) The Bubhukṣu is again of two kinds—Arthakāmapara (Addicted to worldly wealth and pleasure) and Dharmapara (Addicted to Dharma).

**अन्यदेवपरो विष्णुपरो धर्मपरो द्विधा ।**
**मुमुक्षुरपि कैवल्यमोक्षयोगाद् द्विधा मतः ॥ ८ ॥**

अर्थकामपरस्य स्पष्टत्वात्तमुपेक्ष्य धर्मपरभेदमाह—अन्यदेवेति ; देवतान्तरपरः । अथ मुमुक्षुभेदमाह—कैवल्येति । संसारबन्धनिवृत्तिपूर्वककेवलस्वात्मानुभवाभिलाषी । मोक्षेति ; संसारबन्धनिवृत्तिपूर्वकभगवदनुभवाभिलाषी । ८

8. The Dharmapara is of two kinds—Anyadevapara (Addicted to the deities other than Viṣṇu) and Viṣṇupara (Addicted to Viṣṇu alone). And the Mumukṣu is of two kinds—Kaivalyapara (Addicted to Kaivalya) and Mokṣapara (Addicted to Mokṣa).

[There is vast difference between Kaivalya and Mokṣa. The former is the Self-realization and the latter is the enjoyments of extreme bliss of Paramātman in his eternal abode.]

**भक्तप्रपन्नभेदेन स तु मोक्षपरो द्विधा ।**
**द्विधा प्रपन्न एकान्तिपरमैकान्तिभेदतः ॥ ९ ॥**

मोक्षपरभेदमाह—भक्तेति । भक्तः भक्तियोगनिष्ठः । प्रपन्नः प्रपत्त्यपरपर्यायन्यासयोगनिष्ठः । एकान्ती भगवत्प्रपत्तावेवोपायत्वबुद्धया तस्यामेकस्यामेवान्तो निश्चयो यस्य सः । परमपुरुषः श्रीमन्नारायण एवोपायः, प्रपत्तिस्तु तत्प्रसादौपयिकीति बुद्धया परमे एकस्मिन्नेवान्तो निश्चयो यस्य सः परमैकान्ती श्रीवैष्णवोत्तमः । ९

9. The Mokṣapara is of two kinds—Bhakta (Resorting to Bhaktiyoga) and Prapanna (Resorting to Prapattiyoga). The Prapanna is of two kinds—Ekāntin and Paramaikāntin.

[He is Ekāntin who seeks the Mokṣa along with other worldly enjoyments from Bhagavān alone. The Paramaikāntin does not desire any other enjoyments except the Bhagavān. Or he is Ekāntin who is resolved to attain Mokṣa by Prapatti alone taking it as a means. But he is Paramaikāntin who is resolved to attain Mokṣa by the means of Bhagavān alone. That is—for him Bhagavān alone is Upāya and Upeya.]

**दृप्त आर्त इति द्वेधा परमैकान्त्युदाहृतः ।**
**ईश्वरः पञ्चधा भिन्नः परव्यूहादिभेदतः ॥ १० ॥**

परमैकान्तिभेदमाह—दृप्त इति । दृप्तः ; प्रारब्धकर्मफलभोगविलम्बमङ्गीकृत्य तदवसाने मोक्षाभिलाषी । आर्तः ; क्षणमपि प्रारब्धकर्मफलं संसारतापमनुभवितुमशक्नुवानोऽवतप्तेनकुलस्थितमिव दुर्दशामनुभवन् प्रपत्त्युत्तरक्षण एव मोक्षाभिलाषी । ईश्वर एक एव ; तथापि तस्मिन्नौपाधिकभेदानाह—परव्यूहादीति । विभवान्तर्याम्यर्चा आदिपदग्राह्याः ।

10. The Paramaikāntin is told to be of two kinds—Dṛpta (Patient of delay) and Ārta (Impatient of delay). Īśvara is known to be in five-fold forms—Para, Vyūha and so on.

[The five-fold forms are—Para, Vyūha, Vibhava, Antaryāmin and Arcā.]

**पर एकश्चतुर्धा तु व्यूहः स्याद्वासुदेवकः ।**
**संकर्षणश्च प्रद्युम्नोऽनिरुद्ध इति भेदतः ॥ ११ ॥**

परः; षाड्गुण्यपरिपूर्णः परवासुदेवः । व्यूहान्तर्गतो वासुदेवोऽपि षाड्गुण्यपरिपूर्ण उपासनासौकर्यायावस्थितः । अयं च पररूपादत्यन्ताभिन्न इति संकर्षणादिरूपेण व्यूहत्रयवर्णनं केषांचित् । ११

11. Para is only one. But Vyūhas are fourfold, namely—Vāsudeva, Saṁkarṣaṇa, Pradyumna and Aniruddha.

मत्स्यादयस्तु विभवा अनन्ताश्च प्रकीर्तिताः ।
अन्तर्यामी तु भगवान् प्रतिदेहमवस्थितः ॥ १२ ॥

मत्स्यादय इति; हंसहयग्रीवादय आदिपदग्राह्याः । प्रतिदेहमिति; चिदचित्प्रपञ्चस्य सर्वस्यापि तद्देहत्वात् तत्रान्तर्व्याप्य नियन्तेत्यर्थः । १२

12. Vibhava forms are told as innumerable constituting Matsya (Fish) and so on. Īs'vara abides in every things else as Antaryāmin (Inner Ruler).

अर्चावतारः श्रीरङ्गवेंकटाद्र्यादिषु स्थितः ।
केशवादि तु तत्त्वज्ञैर्व्यूहान्तरमुदाहृतम् ॥ १३ ॥

अर्चेति । अर्चा; पूजासौकर्यार्थं प्रतिमारूपेण दिव्यालयेष्ववस्थितः । केशवादीति; नारायणवामनादय आदिपदग्राह्याः । १३

13. Arcās or Images are His avatāras or incarnations enshrined in sacred temples such as S'rī-Raṅgam, Venkaṭādri etc. The Kes'ava and other forms are mentioned by the wise as different Vyūhas.

सत्त्वं रजस्तमः शब्दस्पर्शरूपरसास्तथा ।
गन्धः संयोगशक्ती चेत्यद्रव्यं दशधा मतम् ॥ १४ ॥

अद्रव्यं निरूपयति—सत्त्वमिति । दशधेति; दशधैवेत्यर्थः । वैशेषिकाभिमतानां गुणान्तराणामत्रैवान्तर्भावः । तत्प्रकारश्चान्तिमे परिच्छेदे वक्ष्यते । १४

14. The Sattva (Goodness), Rajas (Motivity), Tamas (Darkness or Dullness), S'abda (sound), Spars'a (touch), Rūpa (colour), Rasa (taste), Gandha (odour), Saṁyoga (union) and S'akti (Potency) are the ten kinds of Adravya (Non-Substance).

**प्रमायाः करणं तत्र प्रमाणं परिकीर्तितम् ।**
**यथावस्थितवस्त्वेकव्यवहारानुगा प्रमा ॥ १५ ॥**

प्रमाणलक्षणमाह—प्रमाया इति । प्रमाकरणं प्रमाणमिति प्रमाणसामान्यलक्षणम् । प्रमाया लक्षणमाह—यथावस्थितेति । पदार्थानतिवृत्तावत्र यथाशब्दः । अवस्थितं वस्तुतत्त्वमनतिक्रम्य यथावस्थितम् । यथावस्थितं यद् वस्तु, तस्यैकस्य यो व्यवहारः शब्देन निर्देशः, सः अनुगः यस्याः सा । अर्थव्यवहारं प्रति तज्ज्ञानस्य कारणत्वात् ज्ञानानन्तरमेव व्यवहार इति व्यवहारानुगत्वं प्रमायाः । संशयादिव्यावृत्तये यथावस्थितेति । यथापदेन अन्यथाज्ञानविपरीतज्ञानयोः, अवस्थितपदेन संशयस्य च व्यावृत्तिः ।   १५

15. The Pramāṇa is that which is an instrument or means for the Pramā (Valid knowledge). The Pramā is the knowledge from which proceeds the verbal usage of a thing in its true and essential nature.

**सा संशयान्यथाज्ञानविपरीतधियो न हि ।**
**एकधर्मिकनानार्थविषया धीस्तु संशयः ॥ १६ ॥**

विवक्षितां व्यावृत्तिमेव विशदयति—सेति ; प्रमेत्यर्थः । न हि ; संशयादिभिन्नेत्यर्थः । संशयलक्षणमाह—एकधर्मिकेति । एकविशेष्यकनानाप्रकारकं ज्ञानमित्यर्थः । यथा 'अयं स्थाणुर्वा पुरुषो वा' इति पुरोवर्तिपदार्थविशेष्यकमिथोविरुद्धस्थाणुत्वपुरुषत्वप्रकारकं ज्ञानं संशयः ।   १६

16. The Pramā is distinct from Saṁśaya (doubt) Anyathājñāna (error) and Viparītadhī (error in reverse nature). Saṁśaya is the knowledge of a thing with various contrary attributes.

[For instance—Is this a post or a man?]

धीस्तु धर्मविपर्यासेऽन्यथाज्ञानमुदाहृतम् ।
सैव धर्मिविपर्यासे विपरीतमतिर्मता ॥ १७ ॥

अन्यथाज्ञानं लक्षयति—धीस्त्विति । धर्मस्य विपर्यास: अन्यथात्वम् ; यथा पीत: शङ्ख इति । अत्र शङ्खे पीतत्वस्यावर्तमानस्य ग्रहणम् । विपरीतधियं लक्षयति—सैवेति । धीरेव धर्मिणो विपर्यासे भ्रम इत्युच्यते ; यथा शुक्तिं दृष्ट्वा रजतधी: । अन्यथाज्ञाने शङ्खत्वेन शङ्खो ज्ञात: । पीतत्वे परमन्यथा ज्ञानम् । भ्रमे तु शुक्तित्वेन शुक्तिर्न ज्ञाता ; किंतु इदंत्वेन सामान्यत इति विशेष: । अत्रेदमवधेयम्—अन्यथाज्ञानं नाम धर्मिणि ज्ञात एव धर्मस्यान्यथाभूतस्य ज्ञानम् । तत्र धर्म एकोऽनेको वा भवितुमर्हति । यथा पीत: शङ्ख इत्याद्य: । एकमेव वस्तु सद्विलक्षणम् असद्विलक्षणं सत् अनिर्वचनीयमित्यन्त्य: । संशयादस्य भेदस्तु संशये धर्मयोर्विरोधप्रतिभास: । अत्र तु वस्तुतस्तयोर्विरोधेऽपि अविरोधाभिमान इति । १७

17. The Anyathājñāna (error) is the knowledge of a thing with a false attribute. The Viparītadhī (error in revese nature) is the knowledge mistaking a thing itself for another thing.

[Anyathājñāna is—The conch is yellow. Viparītadhī is—This (shell) is silver.]

साक्षात्कारप्रमाहेतु: प्रत्यक्षं मानमीरितम् ।
सविकल्पो निर्विकल्प: साक्षात्कारो द्विधा भवेत् ॥ १८ ॥

प्रत्यक्षं लक्षयति—साक्षात्कारेति । साक्षात्काररूपा इन्द्रियजन्या या प्रमा, तस्या हेतुरित्यर्थः । साक्षात्त्वं विभजते—सविकल्पक इति । प्रमायाः प्रमाणस्य च प्रत्यक्षमिति व्यवहारस्तत्र तत्र परिदृश्यते । १८

18. The Pratyakṣapramāṇa is that which causes the perceptive and valid congnition. The perception is of two kinds—Savikalpa and Nirvikalpa.

**ग्रहः प्रथमपिण्डस्य निर्विकल्पक उच्यते ।**
**द्वितीयपिण्डग्रहणं सविकल्पकधीर्भवेत् ॥ १९ ॥**

निर्विकल्पकं लक्षयति—ग्रह इति । प्रथमपिण्डस्य प्रत्यवमर्शरहितस्य गवादेः । एवं च विकल्पपदं प्रत्यवमर्शपरम् । प्रत्यवमर्शरहितं ज्ञानं निर्विकल्पकम् । तत्सहितं ज्ञानं सविकल्पकमित्यर्थः । प्रथमपिण्डग्रहणे तस्य पूर्वदृष्टसजातीयतया प्रत्यवमर्शो नास्तीति तन्निर्विकल्पकमित्युच्यते । द्वितीयपिण्डग्रहणे तु तस्य पूर्वदृष्टसजातीयतया प्रत्यवमर्शोऽस्तीति तत् सविकल्पकमित्युच्यते । एतेन निर्विकल्पके विशेषरहितस्य सन्मात्रस्य ग्रहणमिति मतं, जात्यादीनां पृथक्पृथक् ग्रहणमिति च मतं न सिद्धान्तिनामभिमतमित्युक्तं भवति । १९

19. The Nirvikalpaka is the cognition of a first thing perceived for the first time. The Savikalpaka is the cognition obtained by the perception of another thing of the same kind that was perceived once before with a recollection on it.

**एतदिन्द्रियसापेक्षमनपेक्षं च दृश्यते ।**
**अनपेक्षं स्वतः सिद्धं दिव्यं चेति द्विधा मतम् ॥ २० ॥**

एतत् साक्षात्त्वम् । इन्द्रियेति; प्राकृतबाह्येन्द्रियेत्यर्थः । अनपेक्षम्; इन्द्रियानपेक्षम् । तत्रेन्द्रियापेक्षमयोगिष्वस्मादृशेषु सुप्रसिद्धमिति तदुपेक्ष्य तदनपेक्षमुपपादयति—अनपेक्षमिति । स्वतः सिद्धम्; स्वप्रयत्नेन योगादिना सिद्धम् । दिव्यं स्वप्रयत्नमनपेक्ष्य देवप्रसादात् समासादितम् । अत्रेदं बोध्यम्—

योगिप्रत्यक्षं प्रकृष्टादृष्टविशेषजं युक्तावस्थायां मनोमात्रजन्यम्। अयुक्तावस्थायां तु बाह्येन्द्रियजन्यम्। दिव्यप्रत्यक्षमपि ईश्वरप्रसादसमधिगतदिव्येन्द्रियजन्यमेव। यथोक्तम्,

"दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्।
तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यसि ॥"

इति। २०

20. This perception is also of another two kinds: Indriyāpekṣa (Dependent on senses) and Indriyānapekṣa (Independent on senses). The latter is also of two kinds: Svatassiddha (Self-acquired) and Divya (Divine).

**योगजं तु स्वतः सिद्धमन्यत्स्वामिप्रसादजम्।**
**अर्वाचीनमिदं सर्वमामनन्ति विचक्षणाः ॥ २१ ॥**

अर्वाचीनम्; आधुनिकम्। इदं सर्वम्; अयोगियोगिदिव्यरूपमित्यर्थः। २१

21. Svatassiddha is a perception acquired through the power of yoga and the other *i.e.* Divya is obtained by the grace of the Lord Bhagavān. The wise men call all these as recent.

**नित्यमुक्तेश्वरज्ञानमनर्वाचीनमुच्यते।**
**स्मृतिः प्रमैव प्राचीनानुभवाज्जायते हि सा ॥ २२ ॥**

अनर्वाचीनम्; अनाधुनिकं। मुक्तानां मुक्तिप्राप्त्यनन्तरं दृष्टं ज्ञानं नित्यमेवेत्यर्थः। स्मृतेरप्रामाण्यं नैयायिकादय आमनन्ति; तन्निराकरोति—स्मृतिरिति। प्रमैव; प्रत्यक्षप्रमैव। तत्र हेतुमाह—प्राचीनेति। २२

22. The perception of the Nityas, Muktas and Is'vara is called ancient. The Smṛti (Recollection) also is Pramā (Valid Cognition) since it is produced by the previous apprehension (Anubhava).

**सदृशादृष्टचिन्ताद्यैः संस्कारोद्बोधने सति ।**
**स्मृतिवत्प्रत्यभिज्ञापि प्रत्यक्षेऽन्तर्भवत्यसौ ॥ २३ ॥**

सदृशेत्याद्यर्धं पूर्वान्वयि । प्रत्यभिज्ञा ; सोऽयं देवदत्त इत्यादिरूपा । २३

23. The Smṛti is produced when the Saṁskāra (Reminiscent impression) is aroused by seeing a similar thing, Adṛṣta (Invisible effect of Karman) and Cintā (Deep thinking) etc. Like recollection, Pratyabhijñā (Recognition) also is included under Perception.

**पुण्यपुरुषनिष्ठापि प्रतिभात्रैव संमता ।**
**यथार्थं सर्वविज्ञानमिति यामुनभाषितम् ॥ २४ ॥**

प्रतिभा ; "बुद्धिर्नवनवोन्मेषशालिनी प्रतिभा मता" इति लक्षिता । अत्रैव ; प्रत्यक्ष एव । सर्वविज्ञानम् ; परैरयथार्थतयाभ्युपगतं भ्रमादिकमपि यथार्थमेवेत्यर्थः । तथाहि—पञ्चीकरणप्रक्रियया सर्वेषु प्राकृतेषु वस्तुषु सर्वभूतांशाः सन्त्येव । अत एव शुक्तिकायामपि रजतांशस्य विद्यमानत्वात् रजतसंबन्धि भास्वरत्वादि प्रतीयते । अतस्तत्र रजतज्ञानं नात्यन्तायासत्यालम्बनम्, किंतु सत्यालम्बनमेव । तर्हि तस्य भ्रमत्वव्यवहारः कथमिति चेत्, विषयव्यवहारबाधात् । अयं भावः—पञ्चीकरणरीत्या सर्वत्र सर्वांशानां सत्त्वेऽपि यत्र वस्तुनि यस्यांशा भूयांसस्तत्र तत्त्वेन व्यवहारः । शुक्तिकायां तु रजतांशस्याल्पीयस्त्वात् तत्र रजतत्वव्यवहारः पश्चाद्बाध्यत इति तज्ज्ञानस्य भ्रमत्वव्यवहार इति । एवं स्वप्नादिज्ञानमपि सत्यमेव । तत्तत्पुरुषकर्मानुरूपं तत्तत्पुषमात्रानुभवाय तत्तत्कालिकान् पदार्थान् स्वप्ने परमपुरुषः सृजतीति सिद्धान्तात् । २४

24. Pratibhā (The intuitive faculty of Mind) seen in blessed persons also is included under Perception. It is said by S'rī Yāmunācārya that all knowledge is real.

भूतले तु घटाभावो भूतलात्मैव नेतरः ।
मृद् घटस्य प्रागभावो ध्वंसस्तस्य कपालकम् ॥ २५ ॥

अभावस्य पदार्थान्तरत्वं निराकरोति—भूतल इति । घटाभावो भूतलरूप एव । घटस्य प्रागभावो मृद्रूप एव । एवं घटध्वंसः कपालरूप एवेत्यर्थः । २५

25. The Non-existence of a pot on the earth is nothing but the surface of the earth. The Prāgabhāva (Antecedent non-existence) of a pot is nothing but the clay. And the Pradhvaṁsa (destruction) of a pot is nothing but the kapāla (the pot-sherds).

स्वासाधारणधर्मो हि भेदशब्देन कीर्त्यते ।
शब्दस्वाभाव्यजा कापि प्रतियोगित्वधीः कृता ॥ २६ ॥

अन्योन्याभावस्य पार्थक्यं निराकरोति—स्वासाधारणेति । घटस्य पटाद्भेदो नाम घटत्वरूप एव । तर्हि घटत्वमित्यत्र न पटाकाङ्क्षा, भिन्न इति व्यवहारे तु पटादिति प्रतियोग्याकाङ्क्षा कुत इत्यत्राह—शब्दस्वाभाव्येति । शब्दस्वभावप्रयुक्तैषा व्यवस्थेति भावः । २६

26. The peculiar or uncommon quality of a thing is mentioned by the term Bheda. That the word Bheda invariably requires the Pratiyogin (The counter correlate) is due to the nature of that word.

अन्तःकरणचैतन्यं तद्वृत्त्या विषयेण च ।
चैतन्यं समतापन्नं साक्षात्कारमजीजनत् ॥ २७ ॥
इत्यादि वचनं सर्वं परोक्तं नात्र संमतम् ।
सामान्यं समवायश्च विशेषो नात्र संमतः ॥ २८ ॥

अत्र श्रीशांकराणां मतमनूद्य तत्र स्वानभिमतिमाह—अन्तःकरणेति । चैतन्यमात्माभिन्नं ब्रह्मैव । तच्च चैतन्यमुपाधिभेदात् त्रिधा; प्रमातृचैतन्यम्, प्रमाणचैतन्यम्, प्रमेयचैतन्यं चेति । तत्र यदा चैतन्यमन्तःकरणावच्छिन्नं भवति, तदा तत्र प्रमातृत्वव्यवहारः । वस्तुतोऽन्तःकरणमेव प्रमातृ । तन्निष्ठं प्रमातृत्वं तदवच्छिन्ने चैतन्ये भासत इत्यर्थः । यदा चैतन्यमन्तःकरणवृत्त्यवच्छिन्नं भवति, तदा तत्र प्रमाणत्वव्यवहारः । यदा तु घटादिविषयावच्छिन्नं भवति, तदा प्रमेयत्वव्यवहार इत्यर्थः । एतत्सर्वं नात्र संमतम् । तथा सामान्यसमवायविशेषाख्याः पदार्थाः न पृथक्परिगणनीयाः, तेषामुक्तेष्वेवान्तर्भावात् । तथाहि—सामान्यं नाम सर्वव्यक्त्यनुगत आकारापरपर्यायोऽवयवसंस्थानविशेष एव । समवायोऽपि संयुक्तविशेषणतैव, नान्यत्पदार्थान्तरम् । विशेषोऽपि तत्तत्पदार्थासाधारणधर्मान्नातिरिच्यते ।                                                    २७, २८

27. "The consciousness limited by Antaḥkaraṇa (The internal organ) when becomes closely joined with and non-different from its two other manifestations due to the connection with Vṛtti (activity) and Viṣaya (the object) brings forth the perceptual consciousness."

28. These and other similar sayings of the philosophers of other schools are not acceptable to us. The Sāmanya (generality), Samavāya (Inherent contact) and Vis'eṣa (particularity) are not acceptable to us.

**संख्यादिगुणवर्गस्य गुणपार्थक्यकल्पनम् ।**
**सूत्रकारविरुद्धं यत्तत्सर्वं परिहास्यते ॥ २९ ॥**

अद्रव्येष्वपि दशातिरिक्तानामनभ्युपगममाह—संख्यादीति । संख्यापरिमाणादीनां पृथक्त्वकल्पनमित्यादिकं सूत्रकारमतविरुद्धमिति तत्सर्वं नानुमन्यत इत्यर्थः । संख्यादीनां क्लृप्तेष्वन्तर्भावप्रकारोऽत्रैव दशमेऽद्रव्यपरिच्छेदे वक्ष्यते ।                                                    २९

can be explained to mean the non-difference in His gross form.

कारणात्सूक्ष्मचिदचिद्युक्तात्स्थूलैतदाहितम् ।
कार्यं नान्यदिति व्यक्तमारम्भणनयादिषु ॥ १७ ॥

ननु सिद्धान्ते "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिबलादीश्वरस्य प्रपञ्चोपादानकारणत्वमङ्गीकृतम्। ईश्वरस्य प्रपञ्चस्य च भेदोऽप्यङ्गीकृतः। तथा सति कथं कार्यकारणयोरनन्यत्वसिद्धिः। तयोरनन्यत्वं च सर्ववेदान्तिसंमतम्। "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति व्याहरतः सूत्रकृतः संमतं चेत्याशङ्क्य समाधत्ते—कारणादिति। सृष्टेः पूर्वं सूक्ष्मचिदचिद्विशिष्टात् ब्रह्मणः कारणात् सृष्टौ स्थूलचिदचिद्विशिष्टं ब्रह्मोत्पद्यते। तत्र विशेष्यांशे निष्कृष्टे ब्रह्मणि प्रपञ्चात्मना विकारासंभवेऽपि प्रकारांशे अचिति सततविक्रियात्मके तत्संभवात प्रकारभूताचिद्द्वारा तत्प्रकारिणो ब्रह्मणोऽप्युपादानत्वसंभव इति भावः। एवं परंपरया विकारास्पदत्वं तु प्रामाणिकत्वात् ब्रह्मण इष्टमेवेति भावः। एतदुक्तं भवति। अविकारश्रुतयो विशेष्यभूतब्रह्मपराः। विकारश्रुतयस्तु विशेषणभूताचित्पराः, तत्परंपरया चिदचिद्विशिष्टेश्वरपराश्चेति। १७

17. In the Ārambhaṇādikaraṇa and other topics, it has been clearly stated that the effect qualified by the sentient and non-sentient things in their gross form is not different from the cause qualified by the subtle forms of the sentient and non-sentient things.

निर्गुणत्वपराः काश्चिच्छ्रुतयः सन्ति ता इमाः ।
[1]तद्धेयगुणराहित्यं बोधयन्ति ततो ध्रुवम् ॥ १८ ॥

एवं परस्परं व्याहततयापाततो भासमानानां सगुणनिर्गुणश्रुतीनां समन्वयप्रकारमाह—निर्गुणत्वपरा इति। "निर्गुणम्" "निरञ्जनम्" इत्यादयः श्रुतयो

[1] यद्धेय C.

ब्रह्मणो निर्गुणतामाहुः । "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "स्वाभाविकी ज्ञानबलक्रिया च" "सत्यकामः सत्यसंकल्पः" इत्यादयः श्रुतयस्तस्यैव सगुणतामाहुः । एवं परस्परं व्याहततयेव भासमानाः श्रुतय एवं समर्थनीयाः—सामान्यनिषेधवाक्यानि वाक्यान्तरविहितविशेषेतरविषयाणि परिकल्पनीयानि । यथा "न हिंस्यात्सर्वा भूतानि" इति भूतहिंसानिषेधः "चित्रया यजेत पशुकामः" इत्यादिवाक्यान्तरविहितयज्ञियचित्रादिहिंसाव्यतिरिक्तविषयतया सर्वैरपि प्रमाणतन्त्रैर्वर्ण्यते, तथात्रापि निर्गुणवाक्यं विहितज्ञानशक्त्यादिकल्याणगुणव्यतिरिक्तहेयगुणविषयतया नेयमिति न परस्परं व्याघात इति । यथाह—

"उत्सर्गेणापवादं न खलु नयविदः क्षोभणीयं क्षमन्ते
तस्माद्ग्राह्ये गुणादौ विधिविषयमतिक्रम्य तिष्ठेन्निषेधः ।
एवं शान्ते विरोधे नहि समविषयापच्छिदान्यायसिद्धि-
र्दृष्टो नित्यं निषेधः पर इह ततः स्यादुपक्रान्तिनीतिः ॥"

इति । १८

18. There are some Vedic passages mentioning the Brahman as devoid of qualities. They teach the absence of bad qualities in Him.

इति वेदान्तकारिकावल्यामीश्वरनिरूपणं नवमं प्रकरणम्

---

## १०. अद्रव्यनिरूपणम्

द्रव्यमेवं निरूप्याथ तदद्रव्यं निरूप्यते ।
शुद्धसत्त्वं मिश्रसत्त्वमिति सत्त्वं द्विधा मतम् ॥ १ ॥

पूर्वापरसंगतिप्रदर्शनपूर्वकमद्रव्यनिरूपणं प्रतिजानीते—द्रव्यमिति । अद्रव्यमिति । आगन्तुकावस्थावद् द्रव्यम् । तदन्यदद्रव्यम् । अद्रव्याणि च दशधा—सत्त्वरजस्तमांसि, शब्दस्पर्शरूपरसगन्धाः, संयोगः, शक्तिश्चेति । इमानि च द्रव्यं प्रत्यपृथक्सिद्धविशेषणानि भवन्ति । अतस्तेषां गुणत्वेन व्यवहारः शास्त्रेषु । वैशेषिकाद्यभिमतानां गुरुत्वद्रवत्वादीनां यथासंभवं क्लृप्तेषु पदार्थेष्वेवान्तर्भावः सिद्धान्तिसंमतः । तत्र प्रथमं सत्त्वं निरूपयिष्यन् तस्य द्वैविध्यमाह—शुद्धसत्त्वमिति । १

1. Subsequent to the treatment of the substance, now the non-substance is explained. Sattva is considered to be of two kinds—Pure and Mixed.

रजस्तमोभ्यामस्पृष्टमद्रव्यं पूर्वमुच्यते ।
रजस्तमोविमिश्रं तु मिश्रसत्त्वं प्रकीर्तितम् ॥ २ ॥

तत्र शुद्धसत्त्वस्वरूपमाह—रज इति । सत्त्वस्य रजस्तमोभ्यामस्पर्शो नाम सामानाधिकरण्यसंबन्धेन तद्रहितत्वम् । रजस्तमःशून्यद्रव्यवृत्ति सत्त्वं शुद्धसत्त्वमित्यर्थः । तच्च नित्यविभूतौ ईश्वरादिदेहे च । मिश्रसत्त्वमाह—रजस्तम इति । सामानाधिकरण्यसंबन्धेन रजस्तमोविशिष्टं सत्त्वं मिश्रसत्त्वमित्यर्थः । तच्च

त्रिगुणे तद्विकारेषु च । शुद्धरजः शुद्धतमश्च न स्तः । एवमेषामद्रव्यत्वपरिगणनेन तेषां द्रव्यत्ववादः सांख्याद्यभिमतः प्रत्युक्तः । २

2. Sattva which is not associated with Rajas and Tamas is called the former (Pure-Sattva). Sattva which is associated with Rajas and Tamas is called Mixed-Sattva.

अतीन्द्रियं प्रकाशादिनिदानं सत्त्वशब्दितम् ।
रजो लोभप्रवृत्त्यादिनिदानं कीर्त्यते तमः ॥ ३ ॥

सत्त्वादीनां स्वरूपमाह— अतीन्द्रियेति । अतीन्द्रियत्वे सति प्रकाशादिकारणमद्रव्यं सत्त्वमिति तल्लक्षणम् । शब्दादिव्यावृत्त्यर्थमतीन्द्रियत्वविशेषणम् । रजस्तमोव्यावृत्त्यर्थं द्वितीयं विशेषणम् । तादृशद्रव्यव्यावृत्त्यर्थमद्रव्यमिति विशेष्यम् । रजसो लक्षणमाह—लोभेति । अत्राप्यतीन्द्रियत्वादिविशेषणं तत्प्रयोजनं चानुसंधेयम् । तम इत्युत्तरत्रान्वितं लक्ष्यनिर्देशः । ३

3. Sattva which is beyond the range of the senses brings about the brightness to the objects. Rajas is said to give rise to avarice, activity etc. Tamas is described as following:

प्रमादमोहादिहेतुरित्थं [1] त्रैगुण्यरूपणम् ।
लये समानि चैतानि विषमाण्युदयादिषु ॥ ४ ॥

प्रमादेति । अत्राप्यतीन्द्रियत्वादिविशेषणं तत्प्रयोजनं चानुसंधेयम् । एवं त्रैगुण्यनिरूपणं कृतमित्युपसंहारः । सत्त्वादीनां स्वभावः कार्याणि च भगवता स्पष्टमगायिषत । यथा—

"सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ।

[1] त्रैगुण्यस्य निरूपणम् B.

रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ।
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्यात् विवृद्धं सत्त्वमित्युत ।
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ।
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ।"
"ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ।"
"यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥"
"आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ।
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ।
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ।"

इत्यादि । एतानि सत्त्वरजस्तमांसि लये प्रलयकाले समानि; परस्परं न्यूनताधिक्यवर्जितानि समप्रमाणानि भवन्ति । उदयादिषु उत्पत्तिस्थितिषु विरूपाणि विषमाणि । तत्तत्पुरुषीयादृष्टभेदात् तत्तद्देहेषु तद्द्वारा पुरुषेषु च न्यूनाधिकभावेन संबद्धानि सुखादिकार्यजनकानि भवन्तीत्यर्थः । ४

4. It (Tamas) is the cause for carelessness, delusion and others. Thus is triad of qualities. During the dissolution of the world, these qualities remain in the state of equilibrium. But when the creation takes place, they become divercified.

**श्रोत्रग्राह्यो गुणः शब्दो वर्णावर्णात्मना द्विधा ।**
**तालुभेर्यादिजत्वेन भूतपञ्चकवर्त्यसौ ॥ ५ ॥**

गुणत्रयं निरूप्यानन्तरं शब्दं लक्षयति—श्रोत्रेति । गुण इति स्वरूपकथनम् । न तु लक्षणकोटिप्रविष्टं, प्रयोजनाभावात् । नैयायिकानां तु शब्दत्वजातिव्यावृत्तये गुणशब्द आवश्यकः । अस्माकं तु जात्यनङ्गीकारान्नावश्यक इति भावः । स च शब्दो द्विधा—वर्णात्मकः, ध्वन्यात्मकश्चेति । मानुषताल्वादिस्थानजन्यो वर्णात्मकः । भेरीमृदङ्गादिजन्यो ध्वन्यात्मकः । तत्र वर्णात्मकोऽकारादिक्षकारान्त एकपञ्चाशत्प्रकारः । मातृकापाठे ळळयोरभेदात् क्वचित्पञ्चाशत्प्रकारतया व्यपदेशः । कत्यादयः संध्यक्षरा इति न पृथक्परिगण्यन्ते । एचां तु संध्यक्षरत्वेऽपि पृथग्वर्णतया सर्वजनप्रसिद्धेः पृथक्परिगणनम् । तेषामपि ह्रस्वदीर्घभेदाः सन्त्येव । प्रयुज्यन्ते च ते वेदे क्वचित् शाखासु लोके च प्राकृतद्रमिडादिषु भाषासु च । संस्कृते तु तद्घटितपदाभावात् न माहेश्वरादिसूत्रेषु तत्परिगणनं कृतम् । शब्दश्चैष पृथिव्यादिभूतपञ्चकवर्ती । न वैशेषिकादीनामिवाकाशमात्रवर्ती, भेर्यां शब्दः, गङ्गाप्रवाहे शब्द इत्यादिप्रतीतेः । स चायं शब्द आकाशेन सहोत्पद्यते विलीयते च । ९

5. The quality which is cognoscible by the sense of hearing is called Sound. It is of two kinds—lettered and non-lettered according to their production from the organs palate etc. and instruments drum etc. respectively. It abides in all the five elements.

**स्पर्शस्त्वगिन्द्रियग्राह्यः पृथिव्यादिचतुष्टये ।**
**शीतोष्णादिप्रभेदस्तु शास्त्रान्तरनिरूपितः ॥ ६ ॥**

स्पर्शं लक्षयति—स्पर्श इति । स च पृथिव्यादिभूतचतुष्कवर्ती । स च शीतोष्णानुभयभेदात् त्रिधा । अप्सु शीतः, अग्नावुष्णः, पृथिवीवाय्वोरनुभय इति विवेकः । भूतान्तरसंसर्गात् स्पर्शसंकरानुभवः । ६

6. The quality which is cognoscible by the sense of touch is called Touch. It abides in the four elements earth etc. Its division as cool, warm etc. has been described in other s'āstras.

चक्षुरिन्द्रियनिर्ग्राह्यं रूपमेतच्चतुर्विधम् ।
श्वेतरक्ते पीतकृष्णे इति भेदाद् द्विधादिमम् ॥ ७ ॥

रूपं लक्षयति—चक्षुरिति । रूपस्य चातुर्विध्यं श्वेतादिना । श्वेतस्य द्वैविध्यमाह—द्विधादिममिति । ७

7. The quality which is cognoscible by the sense of vision is called colour. It is of four kinds—white, red, yellow and black. Again the first (white) is of two kinds :

भास्वराभास्वरत्वाभ्यां भास्वरं तेजसि स्थितम् ।
पृथिवीजलयोश्चैतदभास्वरमुदाहृतम् ॥ ८ ॥

द्विविधमेव श्वेतरूपं निर्दिशति—भास्वरत्वेति । तेजसि भास्वरशुक्लम्, जले त्वभास्वरशुक्लमित्यर्थः । एवं च रूपं पृथिव्यादित्रिकवृत्तीत्युक्तं भवति । चित्रं नाम पञ्चमं रूपमिति वैशेषिकादयः; तन्न, संघातवर्तिनामेषामेव तथा व्यवहारादिहेतुत्वात् । ८

8. One of them is brilliant and the other non-brilliant. The brilliant colour is seen in luminous things. The non-brilliant colour is said to exist in earth and water.

रसनेन्द्रियनिर्ग्राह्यो रसः षोढा स कीर्तितः ।
घ्राणग्राह्यो गुणो गन्धो द्विधा शास्त्रान्तरेष्विव ॥ ९ ॥

रसं लक्षयति—रसनेति । षोढेति । मधुराम्ललवणतिक्तरूक्षकषायभेदात् । एषामेव संघातश्चित्ररस इति न तस्य पृथक्परिगणनं कृतम् । गन्धं लक्षयति—

घ्राणेति। अत्रापि गुण इति स्वरूपकथनं न लक्षणकोटिप्रविष्टम्। द्विधेति; सुरभ्यसुरभिभेदेन द्विधेत्यर्थः। पटीरमृगमदादौ सुरभिः। विण्मूत्रादावसुरभिः। ९

9. The quality which is cognoscible by the sense of taste is called Taste. It is said to be of six kinds. The quality which is cognoscible by the sense of smell is called Odour. It is held to be of two kinds like in other s'āstras.

**पृथिव्यामेव गन्धः स्यात्पृथिवीजलयो रसः।**
**पृथिवीजलतेजःसु रूपं स्पर्शः सवायुषु ॥ १० ॥**

गन्धादीनामाश्रयानाह—पृथिव्यामेवेति। जलादौ तत्प्रतीतिस्तु पृथिवीभागसंसर्गकृता। सवायुष्विति; वायुसहितेषु पृथिवीजलतेजःस्वित्यर्थः। १०

10. Odour abides in earth only. Taste abides in earth and water. Colour abides in earth, water and luminous objects. Touch abides in all the three mentiond above and in wind.

**शब्दः पञ्चसु भूतेषु प्राधान्येनैवमुच्यते।**
**पञ्चीकरणरीत्या तु सर्वे सर्वत्र संगताः ॥ ११ ॥**

पञ्चस्विति। पृथिव्यप्तेजोवाय्वाकाशेष्वित्यर्थः। इदं चाश्रयविशेषकथनं तत्र तत्र तत्तद्गुणभूयस्त्वनिबन्धनमित्याह—प्राधान्येनेति। पञ्चीकरणरीत्या तु सर्वे शब्दादयो गुणाः सर्वेष्वपि भूतेषु वर्तन्त इत्याह—पञ्चीकरणेति। पञ्चीकरणप्रक्रिया तु प्रथमपरिच्छेदे व्याख्यातावगन्तव्या। ११

11. Sound abides in all the five elements. The above classification is based on their predominance. But according to the process of Pañcīkaraṇa (five-fold combination of the elements) all these qualities abide in all the five elements.

संयुक्तप्रत्यये हेतुः संयोग इति कथ्यते ।
कार्याकार्यप्रभेदेन स संयोगो द्विधा मतः ॥ १२ ॥

अनन्तरं संयोगाख्यमद्रव्यं निरूपयति—संयुक्तेति । घटपटौ संयुक्ताविल्यादिप्रत्यये व्यवहारे च हेतुतया संयोगः सिध्यन् संयुक्तव्यवहारहेतुत्वमेव स्वस्य लक्षणमवगमयति । यद्यपि तादृशव्यवहारे घटपटावपि विषयतया हेतू इति तत्रातिव्याप्तिः प्रसजेत्, तथापि लक्षणकोटावद्रव्यत्वस्यापि प्रक्षेपान्न दोष इति हृदयम् । स च संयोगः कार्यः, अकार्यश्चेति द्विविधः । १२

12. That is called Saṁyoga (conjunction) which is the cause of the cognition of the substances as conjoined together. Conjunction is considered to be of two kinds—effected and non-effected.

मेषहस्तादिसंयोगः कार्योऽकार्यो विभोर्विभोः ।
विभुद्वयस्य संयोगः श्रुत्या युक्त्या च मन्यते ॥ १३ ॥

तत्र कार्यसंयोगमाह—मेषेत्यादि । परिमितयोर्वस्तुनोः संयोगः कदाचिदेव तयोः क्रियया जायत इति स कार्य इत्यर्थः । स च पुनर्द्विधा—उभयनिष्ठक्रियाजन्यः, अन्यतरनिष्ठक्रियाजन्यश्चेति । तत्राद्यो मेषयोः हस्तयोर्वा संयोगः । द्वितीयः स्थाणुश्येनयोः संयोग इति ज्ञेयम् । अकार्यसंयोगमाह--विभोरिति । विभोर्विभोश्च संयोगोऽकार्य इत्यर्थः । वैशेषिकादयस्तु संयोगसामान्यस्य जन्यत्वं मन्यमाना विभुद्वयसंयोगे तस्य नित्यत्वप्रसङ्गात् तं नाङ्गीकुर्वन्ति । तान् प्रत्याह—विभुद्वयस्येति । श्रुत्येति; "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः" इति श्रुत्या विभोरीश्वरस्य विभ्वन्तरेण संयोगस्य श्रुतत्वात् । युक्त्या चेति; ईश्वरः कालसंयुक्तः कालनैरन्तर्यात् घटवत् इत्याद्यनुमानेनेत्यर्थः । वैशेषिकास्तु संयोगजसंयोगमपीच्छन्ति ; यथा—हस्तपुस्तकसंयोगात् कायपुस्तकसंयोग इति ; तन्न, अवयवपृथक्त्वेनावयव्यनङ्गीकारात् । यः किल हस्तपुस्तकसंयोगः स एव हस्ताद्यवयवसंघातरूपकायपुस्तकसंयोग इति न ततः पृथगिति भावः । १३

13. The conjunction which is seen between the goat and the hand is the effected conjunction. The conjunction which is seen between two all-pervading things is the non-effected conjunction. The conjunction between two all-pervading things is accepted on the strength of the scripture and reasoning.

**तस्मात्कालस्येश्वरेण संयोगोऽपि सुसंमतः ।**
**संयोगाभावरूपो हि विभागो न गुणान्तरम् ॥ १४ ॥**

तदेवाह—तस्मादिति । श्रुतियुक्तिसद्भावादित्यर्थः । कालस्येश्वरस्य च विभुत्वेऽपि तयोः परस्परं संयोगः सम्यक्तया मन्तव्य इत्यर्थः । वैशेषिकादयो विभागाख्यं पृथग्गुणमिच्छन्ति । तान्निराकरोति—संयोगाभावेति । संयोगाभाव एव विभाग इत्युच्यते । अभावस्य च भावान्तररूपत्वात् पूर्वदेशसंयोगनाश-पूर्वकोत्तरदेशसंयोग एव विभाग इत्यर्थः । १४

14. Therefore the conjunction between Īs'vara and time is well approved. Disunion is only the absence of conjunction. Hence it is not a separate quality.

**सर्वहेतुषु हेतुत्वनिर्वोढ्री शक्तिरिष्यते ।**
**मणिमन्त्रादिकेष्वेषा प्रसिद्धा सा त्वतीन्द्रिया ॥ १५ ॥**

अथ शक्तिं निरूपयति—सर्वहेतुष्विति । हेतुनिष्ठः कार्योत्पादनयोग्यो धर्मविशेषः शक्तिरित्यर्थः । यथा वह्नौ दाहानुकूलो धर्मविशेषः शक्तिरित्युच्यते । तथा मणिमन्त्रादिषु दाहादिप्रतिबन्धजननसाधनभूतो गुणविशेषः शक्ति-रित्युच्यते । सा च नेत्रेन्द्रियग्राह्या । किं त्वागमादिग्राह्या । आगमश्च—

“शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।”

इत्यादि: । नन्वेवं तर्हि शब्देष्वर्थबोधनानुकूला शक्तिरङ्गीकरणीया । तथा सति शब्दस्य गुणाश्रयत्वात् द्रव्यत्वापत्तिरिति चेत्, अत्रोच्यते—शब्दे शक्तिर्नाम न काचिदतिरिक्ता शक्तिर्विद्यते । किं तु स स्वरूपेणैवार्थं बोधयति । व्याकरणादयस्तत्र सहकारिण इति नातिरिक्ता शक्तिस्तत्रेति । तथा चाहुः—

"शब्दादिष्वस्ति शक्तिर्यदि कथमिव न द्रव्यतैषां गुणित्वे
सा चेन्नास्त्येव कार्यं किमपि कथमितः स्यादितीदं न युक्तम् ।
शक्तिः शक्ता न वेति स्वयमवमृशतः स्वोक्तदोषप्रसङ्गे
निस्तारश्चेत्स्वभावात्फणिमरणमिह प्रस्तुते किं प्रवृत्तम् ॥"

इति । १५

15. Potency is that quality which helps the causation in all causes. This is seen in gems, mystical spell etc. But it is beyond the scope of the senses.

बुद्ध्यादयोऽष्टौ विज्ञाने भावना चान्तराविशन् ।
द्रवत्वस्नेहसंख्यानपरिमाणानि वेगकः ॥ १६ ॥
द्रव्यस्वरूपरूपत्वान्नाधिक्यं यान्ति केवलम् ।
स्थितस्थापकमेतस्मिन् संयोगेऽन्तर्भवत्यतः ॥ १७ ॥
संयोगाभावरूपत्वात्पृथक्त्वस्य विभागवत् ।
गुरुत्वस्यापि शक्तित्वान्नाधिक्यं क्वापि विद्यते ॥ १८ ॥

वैशेषिकाद्यभिमतानां बुद्ध्यादिगुणानां धर्मभूतज्ञानेऽन्तर्भावमाह—बुद्ध्यादय इति । अष्टाविति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माख्याः, तथा वासनाख्यः संस्कार इति नवापि गुणा ज्ञानेऽन्तर्भवन्ति । तत्र बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाः षडपि ज्ञानविकाररूपा इति ज्ञान एवान्तर्भवन्ति । धर्माधर्मावपीश्वरप्रीत्यप्रीतिरूपावितीश्वरज्ञानेऽन्तर्भवतः । वासनाख्यः संस्कारोऽपि ज्ञानावस्थाविशेषः स्मृतिवत् । एवं च धर्मभूतज्ञानस्य द्रव्यत्वेन तस्य विविधा-

वस्थास्पदत्वं युज्यते। तत्रात्मा निर्विकारः। धर्मभूतज्ञानं तु सविकारमिति प्रमाणसंप्रतिपन्नम्। धर्मभूतज्ञानगताः सर्वे विकारा ज्ञानद्वारा तदाश्रयात्मपर्यन्तं व्यवह्रियन्त इत्यवगन्तव्यम्। अत्रेदं बोध्यम्—बुद्ध्यादीनामष्टानां बुद्धिविकारत्वात् तेषामात्मनिष्ठत्वं युज्यते। भावना तु ज्ञाननिष्ठैव, नात्मनिष्ठा। सा हि बुद्धेर्द्रव्यस्य पूर्वमर्थविशेषे सकृत्प्रसृतस्य पुनस्तत्रैवार्थविशेषे तस्य प्रसरणोपयोगिनीति सिद्धान्तः। तथा च तस्या बुद्धिनिष्ठत्वमेवोचितम्। आत्मनिष्ठत्वे तु तद्धर्मभूतधीविकासहेतुत्वं तस्याः कथ्यमानं न युक्तिमनुसरतीति। द्रवत्वस्नेहसंख्यापरिमाणवेगा द्रव्यस्वरूपान्नातिरिच्यन्ते, तावतैव प्रतीतिव्यवहारयोरुपपत्तेः। एवं स्थितस्थापकमप्यवयवसंयोगविशेष एव, नातिरिक्तम्। एतेन वेगो भावना स्थितस्थापकमिति त्रिविधः संस्कार इति वैशेषिकमतमपास्तम्। पृथक्त्वस्यातिरिक्तगुणतां निरस्यति—संयोगाभावेति। यथा संयोगाभावरूपो विभाग इति तस्य न पार्थक्यमङ्गीकृतं, तद्वत् पृथक्त्वस्यापीति भावः। एवं गुरुत्वमपि पतनानुकूलशक्तिरूपमिति न शक्तेरतिरिच्यते। १६-१८

16—18. The eight qualities *viz.* cognition, etc. and reminiscence are included in Consiousness. Fluidity, vicidity, number, size and speed are nothing but the nature of the relevant substances. Therefore they do not exceed the number of qualities enumerated. Elasticity is included in conjunction. Like disunion, separateness also is of the nature of the absence of contact. Weight also is a kind of potency. Therefore these is no separate quality in excess of the qualities enumerated.

**कर्मणामपि शक्तित्वं केचिदाहुर्मनीषिणः।**
**पदार्थान्तरतामन्ये प्राहुर्वेदान्तवेदिनः॥ १९॥**

अथ वैशेषिकाद्यभिमतं कर्मपार्थक्यं निराचष्टे—कर्मणामिति। संयोगविभागजनकं कर्म। तच्च उत्क्षेपणावक्षेपणाकुञ्चनप्रसारणगमनभेदेन पञ्चविधमिति

वैशेषिकाः कथयन्ति; तन्न, उत्तरदेशसंयोगानुकूलशक्तेरेव कर्मत्वात्। पञ्चविधत्वोक्तिरपि न सम्यक्। उत्क्षेपणम् ऊर्ध्वदेशप्रक्षेपः, अवक्षेपणम् अधोदेशप्रक्षेप इत्यादिरीत्या भेदश्चेत् प्राच्यादिदिग्भेदेनापि विभागप्रसङ्गः। अत उत्तरदेशसंयोगानुकूला शक्तिरेव कर्मेत्येतावता संतोष्टव्यम्। त एव वैशेषिकाः कर्मणामसमवायिकारणत्वमाहुः; तन्न, समवायिनिमित्तसहकार्यतिरिक्तस्यासमवायिकारणस्याप्रसिद्धेः। यदि समवायिकारणप्रत्यासन्नं कारणमसमवायिकारणमिति परिभाष्यते, तदा निमित्तकारणप्रत्यासन्नमनिमित्तकारणमिति किंचित्प्रकल्प्येत। न हि तदस्ति। तस्मात् तदप्यप्रामाणिकमिति मन्तव्यम्। इत्थं कर्मणां शक्त्यावन्तर्भावमुपपाद्य केषांचिद्वेदान्तिनां मतेन कर्मणां पार्थक्यमाह—पदार्थान्तरतामिति। अयमत्र पृथक्परिगणयतां भावः—विभागपूर्वकोत्तरसंयोगानुकूला शक्तिः कर्मेति पक्षे एकेन जलधरेण विभज्यमाने जलधरान्तरेण तेन वा पुनः संयुज्यमानशिलोच्चये चलतीति प्रत्ययव्यवहारयोः प्रसङ्गः। यदि देशपदप्रक्षेपेण पूर्वदेशविभागपूर्वकोत्तरदेशसंयोगेत्यादिना लक्ष्यते, तदापि महाप्रवाहपतितनिष्कम्पमकरे चलतीति प्रत्ययप्रसङ्गः। तस्मात्कर्माख्यं पदार्थान्तरमङ्गीकरणीयमिति। १९

19. Some wise men say that Karman (action) also is included in potency. But other Vedāntins say that it is a separate quality.

प्राचीनग्रन्थपदवीमनुसृत्य यथामति।
विशिष्टाद्वैतसिद्धान्तफक्किकेत्थं निदर्शिता ॥ २० ॥

ग्रन्थमुपसंहरति—प्राचीनेति। प्राचीनग्रन्थोऽत्र न्यायसिद्धाञ्जनादिः। फक्किकेत्यनेन विस्तरभिया केवलं दिक्प्रदर्शनं कृतमित्युक्तं भवति। २०

20. Following the way of the earlier texts, the logical exposition of the Vis'iṣtādvaita system is exemplified to the best of my judgment.

**अण्णयार्याध्वरीन्द्रस्य तार्तीयीकतनूभुवा ।**
**श्रीमद्वेंकटदासेन निर्मिता कारिकावली ॥ २१ ॥**

स्वस्याभिजनसंपत्तिमाह—अण्णयार्येति । तार्तीयीक इति । "तीयादीकक् स्वार्थे" इतीकक्प्रत्यये रूपम् । वेंकटदासेनेति स्वनामनिर्देशः । कारिकावलीति ग्रन्थनाम । २१

21. This string of concise verses has been composed by Veṇkaṭadāsa, the third son of Aṇṇayārya.

**निरमायि रमायत्तपरमाद्भुततेजसः ।**
**मुदमाधातुकामेन मयेयं कारिकावली ॥ २२ ॥**

स्वस्य ग्रन्थकरणे परमं प्रयोजनं भगवत्प्रीतिरेवेत्याह—निरमायीति । रमायत्तेति । भगवतः सर्वोऽपि महिमातिशयो महालक्ष्मीसंबन्धकारित इति भावः । यथोक्तम्, "अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा" इति । स्वतः-प्रामाण्यमूर्धाभिषिक्तया श्रुत्यापि विध्यादिसाधारण्येन संशयास्पदे परतत्त्वनिर्णये चिकीर्षिते, "ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति विनिर्दिश्य, लक्ष्मीपतित्व-पुरस्कारेणैव हि तस्मिन् परदेवतात्वं निर्णेतव्यमासीत् । अमुमेवाशयमभियुक्ताः सरसयोक्त्याविष्कुर्वन्ति । यथा—

"अपाङ्गा भूयांसो यदुपरि परं ब्रह्म तदभू-
दमी यत्र द्वित्राः स च शतमखादिस्तदधरात् ।
अतः श्रीराम्नायस्तदुभयमुशंस्त्वां प्रणिजगौ
प्रशस्तिः सा राज्ञो यदपि च पुरीकोशकथनम् ॥"

इति । २२

22. This string of concise verses was composed by me with a desire to please the Lord of great marvellous lustre which is dependent on Lakṣmī.

भक्तिप्रपत्त्योरधिदेवताभ्या-
मिवाब्जनाभस्य पदाम्बुजाभ्याम् ।
समर्पयेऽस्मन्मतकारिकावलीं
तदङ्गुलीसंख्यनिरूपणाढ्याम् ॥ २३ ॥

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥"

इत्युक्तरीत्या सात्त्विकत्यागं कुर्वन् स्वग्रन्थं भगवत्पादाम्बुजयोः समर्पयति— भक्तीति । पदाम्बुजाभ्यामिति चतुर्थी । पदाम्बुजे प्रीणयितुमित्यर्थः । "क्रियार्थोपपदस्य च" इत्यादिना चतुर्थी। तदङ्गुलीति तच्छब्देन पदाम्बुजे विवक्षिते । तदङ्गुलीसंख्या दश । दशसंख्याकनिरूपणैराढ्यामित्यर्थः । २३

23. I dedicate at the lotus-feet of the Lord (having the lotus in the navel) which feet seem as presiding deities of Devotional meditation and Self-surrender, the string of concise verses of our system of thought, whose chapters are in the same number as that of the fingers of those feet.

यः श्रीमच्छठमर्षणान्वयपयःसिन्धोः सुधांशुर्महा-
नण्णार्यः समभूद्विभूषितचतुस्तन्त्रो वचःकान्तिभिः ।
तस्यासौ तनयः समार्जितनयः श्रीवेंकटार्यः सुधीः
श्रुत्यन्तान्वयकारिकालिमकरोत्प्रीत्यै महत्यै सताम् ॥ २४ ॥

इति श्रीमच्छठमर्षणान्वयपयोधिचन्द्रमःषड्दर्शनीपारदृश्वनोऽण्णयार्य-
सोमपीथिनस्तृतीयसुतेन बुधिवेंकटाचार्येण विरचितायां वेदान्त-
कारिकावल्यामद्रव्यनिरूपणं नाम दशमं प्रकरणम्

स्वग्रन्थस्य श्रद्धेयताभिव्यक्त्यै स्वाभिजनादिसंपत्तिं वर्णयति—य इति । यः शठमर्षणवंशादेव क्षीरसमुद्रादुदितश्चन्द्रोऽभूत् , येन च चतुस्तन्त्री न्याय-

व्याकरणमीमांसाशारीरकाख्यशास्त्रचतुष्टयं वच:कान्तिभिर्विभूषिता अलंकृता, तस्य अण्णयार्यस्य तनय: सदाचार्यसेवासमधिगतनयसरणि: वेंकटाचार्यनामा सुधी: वेदान्तकारिकावलीनामकमिमं ग्रन्थं सतां महत्यै प्रीत्यै अकरोदित्यर्थ: ।  २४

वेदान्तार्थनितान्तचिन्तनरता: सन्त्येव सन्तो बुधा-
स्तेषां तोषकृते कृतेति विवृतिर्वेदान्तपद्यावले: ।
अन्ये मत्सरिणो मितंपचधियो निन्दन्तु नन्दन्तु वा
नैवातो मनसो मनागपि भवेत्साद: प्रसादोऽथवा ॥

इत्थं श्रीशैलसच्चक्रवर्तिवंश्य: सतां मत: ।
श्रीकृष्णोऽकृत वेदान्तकारिकावलिटिप्पणम् ॥
अनेन भगवान् विश्वसर्गस्थित्यन्तकर्मठ: ।
सर्वकर्मसमाराध्य: प्रीयतां देवनायक: ॥

इति वेदान्तकारिकावल्यामद्रव्यनिरूपणं दशमं प्रकरणम्

प्रमेयनिरूपणं समाप्तम्

24. Great Aṇṇayārya who was the moon of the milky ocean of the family of S'aṭhamarṣaṇa, beautified the four s'āstras with his brilliance of expression. His son Venkaṭārya of great intellect, well equipped with the philosophical thought, wrote this string of concise verses on Vedānta to the entire satisfaction of the good.

Thus here ends the tenth chapter entitled the treatment of non-substance, of the work called the Vedāntakārikāvalī composed by Bucci Veṅkaṭācārya, the third son of Aṇṇayāryasomapīthin, who was the moon of the ocean of S'aṭhamarṣaṇa family and seer of other shore of six dars'anas.

C and D read the following verses after the colophon :

शृणु वेंकटशैलशेखराग्रे कृतवासं नृहरे भवन्तमद्य ।
निशितेन मदात्मना शरेण प्रणिविध्यामि हृदन्तरेऽवधेहि ॥
रामानुजार्यैरससत्तनूजै: स्थितै: सुनारायणवाटिकायाम् ।
मुक्तावलीयं महदार्यनामभिर्दृष्टा परिष्कारवती बभूव ॥

# APPENDIX I

## मूलस्थकारिकार्धानामनुक्रमणिका

## APPENDIX II

# व्याख्यानोदाहृतप्रमाणानामनुक्रमः

---

ABBREVIATIONS USED IN THE APPENDIX II

| | | | |
|---|---|---|---|
| अधि. | अधिकरणसारावलिः | तै-आ. | तैत्तिरीयारण्यकम् |
| अष्टा. | अष्टाध्यायी. | तै-ब्रा. | तैत्तिरीयब्राह्मणम् |
| आत्म. | आत्मसिद्धिः | तै-सं. | तैत्तिरीयसंहिता |
| आप-श्रौ. | आपस्तम्बश्रौतसूत्रम् | नाट्य. | नाट्यशास्त्रम् |
| इष्ट. | इष्टसिद्धिः | नाम. | नामलिङ्गानुशासनम् |
| ऋ. | ऋग्वेदः | नित्या. | नित्यानुसंधानम् |
| क. | कठोपनिषत् | नृ-उ. | नृसिंहोत्तरतापिन्युपनिषत् |
| काठ. | काठकम् | न्या-सि. | न्यायसिद्धाञ्जनम् |
| काव्य. | काव्यप्रकाशः | न्या-सू. | न्यायसूत्रम् |
| कू-पु. | कूर्मपुराणम् | पर. | परमार्थस्तुतिः |
| कौ. | कौषीतक्युपनिषत् | परम. | परमसंहिता |
| गी-सं. | गीतार्थसंग्रहः | पा-शि. | पाणिनीयशिक्षा |
| चतुः. | चतुःश्लोकी | पु-सू. | पुरुषसूक्तम् |
| चू. | चूलिकोपनिषत् | प्र. | प्रश्नोपनिषत् |
| छा. | छान्दोग्योपनिषत् | बृ. | बृहदारण्यकोपनिषत् |
| जै-ब्रा. | जैमिनीयब्राह्मणम् | ब्र-सू. | ब्रह्मसूत्रम् |
| त-प्र. | तत्त्वप्रकाशिका | भ-गी. | भगवद्गीता |
| त-मु. | तत्त्वमुक्ताकलापः | भाम. | भामती |
| त-वा. | तन्त्रवार्तिकम् | म-ना. | महानारायणोपनिषत् |
| तेजो. | तेजोबिन्दूपनिषत् | मनु. | मनुस्मृतिः |
| तै. | तैत्तिरीयोपनिषत् | म-भा. | महाभाष्यम् |

| | | | |
|---|---|---|---|
| महो. | महोपनिषत् | वि-ध. | विष्णुधर्मः |
| मी-सू. | मीमांसासूत्रम् | विष्णु. | विष्णुपुराणम् |
| मु. | मुण्डकोपनिषत् | वै-सू. | वैशेषिकसूत्रम् |
| र-सा. | रहस्यत्रयसारः | शान्ति. | शान्तिपर्व |
| रामा. | रामायणम् | श्री-को. | श्रीगुणरत्नकोशः |
| रुद्र. | रुद्रकोशः | श्रीभा. | श्रीभाष्यम् |
| लक्ष. | लक्षणावली | श्रुत. | श्रुतप्रकाशिका |
| ल-त. | लक्ष्मीतन्त्रम् | श्वे. | श्वेताश्वतरोपनिषत् |
| लि-पु. | लिङ्गपुराणम् | षडर्थ. | षडर्थसंक्षेपः |
| वङ्गी. | वङ्गीश्वरकारिका | सां-का. | सांख्यकारिका |
| व-पु. | वराहपुराणम् | सु. | सुबालोपनिषत् |
| वाक्य. | वाक्यपदीयम् | स्तो-र. | स्तोत्ररत्नम् |

---

## ERRATA

| | | | |
|---|---|---|---|
| Page 25 | Line 9 | Read 'Stand' | For 'Stands |
| „ 45 | „ 5 | „ तत्तेजो | „ तत्तजो |
| „ 79 | „ Last | „ रुत्पाद्या | „ रूत्पाद्या |

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| No. | Title | Rs. | A. |
|---|---|---|---|
| 1910—1. | A Preliminary List of the Saṁskṛt and Prākṛt MSS. in the Adyar Library. (Saṁskṛt-Devanāgarī). Boards ... Rs. 1-8. Cloth ... | 2 | 0 |
| 1912—2. | A Descriptive Catalogue of the Saṁskṛt MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads. Cloth ... | 5 | 0 |
| 3. | The Minor Upaniṣads (Saṁskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṁnyāsa. Cloth ... | 10 | 0 |
| 1916—4. | Ahirbudhnya-Saṁhitā of the Pāñcarātra Āgama (Saṁskṛt). 2 Vols. Cloth ... | 10 | 0 |
| 5. | Introduction (English) to the Pāñcarātra and the Ahirbudhnya Saṁhitā. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | Yoga Upaniṣads 20—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | Sāmānya Vedānta Upaniṣads 24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | Vaiṣṇava Upaniṣads 14—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* Paṇḍit A Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'aiva Upaniṣads 15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri (Reprinted 1950) ... | 5 | 8 |
| 10. | S'ākta Upaniṣads 8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri (Reprinted 1950) ... | 3 | 8 |
| 1926—11. | Catalogue of Samskṛt MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | Saṁnyāsa Upaniṣads 17—with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 13. | Rukmiṇīkalyāṇa-Mahākāvya by Rājacūḍāmaṇi-Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library. ... | 5 | 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad-Brahma-Yogin. Edited *by* the Paṇḍits of the Adyar Library | | |
| | Īs'a to Aitareya, Vol. I ... | 4 | 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 | 0 |
| | Vols. 1 and 2, Boards ... | 9 | 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 | 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 18. | PRATYABHIJÑAHṚDAYA (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 | 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 | 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga : | | |
| | Parts 1 and 2. Nature and Man ... | 9 | 0 |
| | Part 3. God—From Humanity to Divinity ... | 2 | 8 |
| | Part 4. Some Practical Applications ... | 2 | 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 | 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 | 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 | 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of S'rī Upaniṣad-Brahma-yogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 | 0 |
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |

* ***Published under the auspices of the Adyar Library Association.***

| | | Rs. | A. |
|---|---|---|---|
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (Second Edition—Reprinted, 1948). Edited *by* Paṇḍit S. Subrahmanya Sastri (with English Translation Etc.) ... | 5 | 0 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |
| 1942—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section. Part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Dinnāga. Edited with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 8 |
| 33. | SOME CONCEPTS OF ALAṀKĀRA-S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA-RAKṢĀ of S'rī Vedānta-Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| 1943—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 12 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA. Edited with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |
| 42. | UṢĀNIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| 44. | ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |

| | | Rs. | A. |
|---|---|---|---|
| | 45. ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| | 46. CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| | 47. ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945— | 48. RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| | 49. ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| | 50. ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| | 51. SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| | 52. VAIṢṆAVA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946— | 53. NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I—Books i and ii)... | 4 | 0 |
| | 54. PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 | 4 |
| | 55. SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947— | 56. THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| | 57. UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| | 58. ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |
| | 59. JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary ... | 20 | 0 |
| | 60. DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| | 61. ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja ... | 15 | 0 |
| | 62. DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 1948— | 63. HARICARITA OF PARAMES'VARA—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 5 | 0 |

| | | Rs. | A. |
|---|---|---|---|
| 64. | Gautama-dharmasūtra-pariśiṣṭa (Second Praśna)—Edited *by* A. N. Krishna Aiyangar ... | 9 | 0 |
| 65. | Saṁkalpasūryodaya of Śrī Veṅkaṭanātha with the Commentaries Prabhāvilāsa and Prabhāvalī. Edited *by* Paṇḍit V. Krishnamacharya Part I ... | 15 | 0 |
| | Part II ... | 15 | 0 |
| | Reprint of No. 28—Varivasyārahasya of Bhāsurānandanātha—Edited by Paṇḍit S. Subrahmanya Sastri (with English translation, Etc.) ... | 5 | 0 |
| 1949—66. | Indian Cameralism (A Survey of some aspects of Artha-śāstra) *by* K. V. Rangaswami Aiyangar ... | 7 | 0 |
| | Second Edition—Revised and Enlarged—of No. 21—Where Theosophy and Science Meet (Parts 1 and 2, Nature and Man) by a body of Experts. Edited *by* Prof. D. D. Kanga ... | 9 | 0 |
| 67. | Tirukkuṟaḷ of Tiruvaḷḷuvar—(In Roman Transliteration) with English Translation by Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| 68. | Tirukkuṟaḷ of Tiruvaḷḷuvar, with English Translation *by* Prof. V. R. Ramachandra Dikshitar ... | 3 | 0 |
| 69. | Catalogue of the Adyar Library, Western Section, part 4 (French) ... | 1 | 12 |
| 70. | Alaṁkārasaṁgraha by Amṛtānandayogin. Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 9 | 0 |
| 71. | Yājñikyupaniṣad Vivaraṇam by Puruṣothamānanda tīrtha—Edited *by* Paṇḍit V. Krishnamacharya and Paṇḍit K. Ramachandra Sarma ... | 2 | 8 |
| 1950—72. | Edicts of Aśoka (Priyadarśin). With English Translation *by* G. Srinivasa Murti and A. N. Krishna Aiyangar. Boards Rs. 2-0. Cloth ... | 3 | 0 |
| 73. | Some Aspects of Education in Ancient India (Dewan Bahadur K. Krishnaswami Rao Endowment Lectures, University of Madras, 1949) *by* Prof. C. Kunhan Raja ... | 2 | 8 |
| | Reprint of No. 9. Śaiva Upaniṣads. 15—with the commentary of Śrī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 8 |
| | Reprint of No. 10. Śākta Upaniṣads. 8--with the commentary of Śrī Upaniṣad Brahma Yogin—Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 8 |
| 74. | The Philosophy of Bhedābheda, *by* P. N. Srinivasachari ... | 9 | 0 |

Rs. A.

75. VEDĀNTAKĀRIKĀVALĪ OF BUCCI VENKAṬĀCĀRYA—Edited *by* Pandit V. Krishnamacharya with his own Commentary and English Translation. ... 5 0

## PAMPHLETS

### 1939

VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprint from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... 0 3

### 1940

RĀJAMṚGĀṄKA OF BHOJA. (Reprint from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma 0 4

### 1942

ṢAṬPAÑCĀŚIKĀ, a Śilpaśāstra manual. (Reprint from the Adyar Library Bulletin, February, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 5

PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprint from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... 0 6

A LIST OF MANUSCRIPTS. Catalogue of MSS. at the private Library of Trichinopoly Krishna Iyer's House at Negapatam. (Reprint from the Adyar Library Bulletin, October, 1942) ... 1 0

THE PATH OF GREATNESS. (Reprint from the Adyar Library Bulletin, December, 1942), *by* Dr. G. S. Arundale ... 0 6

### 1943

VIŚEṢĀMṚTA of Tryambaka Miśra. (An orthographical lexicon), Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, May, 1943) ... 0 12

A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, October, 1940, May and October, 1943) ... 0 12

### 1946

DHARMACAURYARASĀYANA OF GOPĀLAYOGĪNDRA—Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, October and December, 1946) ... 1 12

### 1948

SAMSKṚTAGRANTHIVIGHAṬANA — *by* Prof. C. Kunhan Raja (Reprint from the Adyar Library Bulletin, February 1948) ... 0 8

CANDRAVĀKYAS OF VARARUCI—Edited *by* Prof. C. Kunhan Raja with Appendices (Reprint from the Introduction to Adyar Library Series No. 63) ... 2 0

Rs. a.

BHĀRATA-RĀṢṬRA-SAṄGHAṬANĀ (Indian Constitution in Sanskrit verses)—a sample—*by* Prof. C. Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol. XII) ... 1 8

LANGUAGE PROBLEM IN INDIA—(Reprint from the Adyar Library Bulletin, Vol. XII, Part 4, December, 1948.) ... 1 0

SANSKRIT IN INDIA—*by* G. Srinivasa Murti. (Reprint from the Adyar Library Bulletin, Vol. XII, Part 3, October, 1948) ... 1 0

INFLUENCE OF INDIAN THOUGHT ON FRENCH LITERATURE—*by* Prof. Louis Renou. (Reprint from the Adyar Library Bulletin, Vols. XII and XIII) ... 0 12

## 1949

THE FUTURE ROLE OF SANSKRIT (Sanskrit Language)—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 1, February, 1949) ... 0 12

THE FUTURE ROLE OF SANSKRIT (Sanskrit Literature, Sanskrit Scholarship and Sanskrit Scholars) *by* Louis Renou and C. Kunhan Raja (Reprint from the Adyar Library Bulletin, May, 1949) ... 1 8

DAS'AKUMĀRAKATHĀSĀRA OF APPAYĀMĀTYA—Edited *by* H. G. Narahari (Reprint from the Adyar Library Bulletin, Feb. and May, 1949) ... 1 0

BRAHMASŪTRABHĀṢYA-SIDDHĀNTASAMGRAHA *by* S'rī Upaniṣad-brahmayogin—Edited by Pandit V. Krishnamacharya. (Reprint from the Adyar Library Bulletin, Vol. XIII, Parts 2 and 3) ... 1 8

INDIA'S CULTURAL ROLE IN THE WORLD *by* C. Kunhan Raja (Reprint from the Adyar Library Bulletin, Vol. XIII, Part 4) ... 0 12

## 1950

ODE TO INDIA, Composed by C. Kunhan Raja on the Occasion of the Proclamation of the Indian Republic on Thursday. 26th January 1950. (Reprint from the Adyar Library Bulletin, Vol. XIV, Part 1). ... 0 6

PĀDAVIDHĀNA OF S'AUNAKA with Bhāṣya—Edited *by* H. G. Narahari. (Reprint from the Adyar Library Bulletin, Vols. XIII and XIV) ... 1 0

HINDU RELIGION AND HINDU CUSTOMS—*by* C. Kunhan Raja. (Reprint from the Adyar Library Bulletin, Vol. XIV, Part 1,)... 0 8

INTRODUCTION TO EDICTS OF AS'OKA (Priyadars'in)—*by* K. V. Rangaswami Aiyangar. (Reprint of the Introduction to Adyar Library Series No. 72) ... 0 8

## IN THE PRESS

DESCRIPTIVE CATALOGUE OF SANSKRIT MSS. in the Adyar Library, *by* Pandit V. Krishnamacharya. Vol. IX—Mīmāṁsā and Advaita-Vedānta.

Śaiva and Śākta Upaniṣaḍs—Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* G. Srinivasa Murti.

Yoga Upaniṣads—Translated into English *by* T. R. Srinivasa Aiyangar and Edited *by* G. Srinivasa Murti. (Second Edition).

Caturdaśalakṣaṇī of Gadādhara with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

Āpastambasmṛti—Edited *by* A. N. Krishna Aiyangar.

Saṁgītaratnākara—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

Horāśāstra—with the commentary Apūrvārthapradarśikā *by* A. N. Srinivasaraghava Aiyangar.

Sālistambasūtra—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

Saṁgītaratnākara, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

Descriptive Catalogue of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

Aristotle's Katharsis and Bharata's Sthāyibhāvas *by* Prof. C. Kunhan Raja.

Language—Barrier or Bridge *by* A. Sita Devi.

Ṛgvedabhāṣya of Skandasvāmin—Edited by Prof. C. Kunhan Raja.

## READY FOR THE PRESS

Āśvalāyanagṛhyasūtra with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

Nyāyakusumāñjali of Udayana with the Commentary of Varadarāja. Edited *by* Prof. C. Kunhan Raja.

Caturdaśalakṣaṇī of Gadādhara—with Commentaries—Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

Pakṣatā of Gadādhara—with four commentaries Edited *by* Paṇḍit N. Santanam Aiyar.

Siddhāntalakṣaṇam of Gadādhara with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

Avayava of Gadādhara—with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

Sāmānyanirukti of Gadādhara with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

Vyutpattivāda of Gadādhara with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

Ten Major Upaniṣads—English Translation *by* T. R. Srinivasa Aiyangar—Edited *by* G. Srinivasa Murti.

---

*Agents for our publications :*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras 20**